# ऐतरेयब्राह्मणभाष्यान्तर्गतविषयाणामनुक्रमणिका ।

पृष्ठाङ्काः

मङ्गलाचरणश्लोकौ, ग्रन्थकारस्य वेदार्थवचनप्रतिज्ञा, वेदविषयो वेदलक्षणविषयो वेदविषयप्रयोजनसंबन्धाधिकारिविषयश्च प्रश्नः, वेदप्रामाण्याक्षेपः, वेदलक्षणं, विषयप्रयोजनसंबन्धाधिकारिकथनम् ... १

स्त्रीशूद्रादीनामपि वेदाधिकारः स्यादित्याक्षेपः, तेषामुपनयनराहित्येन वेदाधिकाराभावप्रतिपादनम्, वेदस्य स्वतःप्रामाण्यसमर्थनम् । वेदस्य नित्यत्वाक्षेपपुरःसरं व्यावहारिकनित्यत्वकथनम्, वेदस्य व्याख्येयत्वकथनम्, वेदार्थावबोधे विध्यभावाद्बोधसाधनं व्याख्यानं व्यर्थमित्याक्षेपः, अध्ययनविधेर्बोधपर्यवसायित्वकथनेन व्याख्यानसाफल्यकथनम् .... .... .... ... २

ज्ञानस्य पृथग्विधानादध्ययनं पाठमात्रमित्याशङ्कापूर्वकमेतन्मतस्वीकारः, विधिमन्तरेणानुष्ठानान्यथानुपपत्त्या वेदार्थज्ञानस्य प्रापितत्वान्नैतद्विधेयमित्याशङ्का तत्समाधानं च, अनुष्ठानज्ञानयोः स्वातन्त्र्येण पृथक्फलप्रतिपादनम्, अल्पप्रयाससाध्यवेदनेन तत्सिद्धौ बह्वायाससाध्यानुष्ठानाक्षेपस्तत्समाधानार्थं तरणीयब्रह्महत्याया मानसवाचिककायिकत्वादिभेदकथनं च, अर्थवादस्य स्वार्थे प्रामाण्याभिधानम्, ग्रावाणः प्लवन्त इत्याद्यर्थवादस्य प्रमाणान्तरबाधितत्वात्स्वार्थे प्रामाण्याभावकथनम्, द्विःसंवत्सरस्य सस्यं पच्यत इत्याद्यर्थवादस्य बाधाभावेऽप्यनुवादत्वात्स्वार्थे प्रामाण्यराहित्योक्तिः, वेदस्य मन्त्रब्राह्मणरूपभागद्वयात्मकत्वप्रतिपादनम्, मन्त्रविषयविचाराणां संहिताव्याख्याने द्रष्टव्यत्वकथनम् .... .... .... ३

ब्राह्मणलक्षणस्य विस्तरेण प्रतिपादनम्, अग्निर्वै देवानामवम इत्यादिग्रन्थे ब्राह्मणलक्षणस्य विद्यमानत्वाद्ब्राह्मणसंज्ञाकथनम्, एतद्ब्राह्मणस्यैतरेयकत्वे संप्रदायविदामाख्यायिकाकथनम् .... .... .... ४

संक्षेपेण चत्वारिंशदध्यायोपेतब्राह्मणविषयकथनम्, गोष्टोमायुष्टोमादिषु सोमयागेषु ज्योतिष्टोमस्य प्राथम्ये श्रुतिप्रदर्शनम्, सप्तसंस्थोपेतज्योतिष्टोमस्य चतसृणामग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थानामनुक्रमेण कथनप्रतिज्ञा, अग्निष्टोमस्य प्रकृतित्वकथनमुक्थ्यादीनां विकृतित्वकथनं च, विकृतीनां प्रकृतिसापेक्षत्वेनाग्निष्टोमस्यैवाऽऽदौ वक्तव्यत्वोक्तिः, अग्निष्टोमोपक्रमेऽवश्यर्त्विग्वरणकथनाभावहेतुकथनं दीक्षणीयेष्टिकथनहेतुकथनं च ... ५

पृष्ठाङ्काः

दीक्षणीयेष्टिं विधातुमग्नेर्विष्णोश्च प्रशंसनम्, अग्नाविष्णुदेवताकदीक्षणीयेष्टिविधानम् ... ६

आग्नावैष्णवपुरोडाशनिर्वापेण सर्वदेवतातृप्तिकथनम्, सर्वदेवतातृप्तिसिद्ध्यर्थं तयोः सर्वदेवतात्मकत्वकथनम् .... .... .... ७

प्रकारान्तरेण प्रशंसा, यथोक्तविधौ ब्रह्मवादिचोद्यपरिहारयोः कथनम् .... .... .... ८

दीक्षणीयेष्टौ प्रतिष्ठाकामस्य पुरोडाशमपोद्य द्रव्यान्तरविधानम्, घृतचरुणा प्रतिष्ठाराहित्यपरिहारकथनम् ... .... .... ९

घृतचरोः प्रतिष्ठाहेतुत्ववेदनप्रशंसा, दीक्षणीयेष्टिकालविधानम् १०

पञ्चदशसंख्यामपवदितुं सामिधेनीनां सप्तदशसंख्याविधानम्, सप्तदशसंख्याप्रशंसनम् .... ११

सप्तदशसंख्यावेदनप्रशंसा, उक्तविषयमीमांसाश्लोकाः .... १२–१४

दीक्षणीयेष्टिप्रशंसार्थमिष्ट्याहूत्यूतिहोतृशब्दानां निर्वचनम्.... १५

दीक्षणीयेष्ट्या दीक्षितस्य संस्कारविशेषान्विधातुं प्रस्तावः .... १६

अभिषेकादिसंस्कारविधानम् १७

उक्तसंस्कारसंस्कृतस्य दीक्षितस्य प्राचीनवंशाख्यशालाप्रवेशविधानम् .... .... .... १८

दीक्षितनियमविधानम्, विहितार्थप्रशंसा, दीक्षितस्य देवयजनाद्बहिर्गमननिषेधः, वस्त्राच्छादनरूपसंस्कारान्तरविधानम् .... १९

गर्भस्थानीयदीक्षितप्रावरणवस्त्रस्योल्बस्थानीयत्वप्रदर्शनम्, वाससो बहिर्वेष्टनान्तरविधानम्, कृष्णाजिनस्य बहिर्वेष्टनत्वसाम्येन जरायुरूपत्वप्रदर्शनम्, मुष्टिकरणरूपसंस्कारान्तरविधानम्, मुष्टिद्वयप्रशंसनम् .... ... .... २०

कृष्णाजिनवेष्टनस्यावभृथगमनात्प्रागेवोन्मोचनविधानम्, कृष्णाजिनवद्वाससोऽपि प्राप्तोन्मोचनवारणम्, उक्तविषयमीमांसा .... २१

अकृतसोमयागयजमानार्थं दीक्षणीयेष्टौ हौत्रोपयोग्याज्यभागपुरोनुवाक्याविधानम् .... .... २२

कृतसोमयागयजमानार्थमाज्यभागपुरोनुवाक्याविधानम्, उक्तविषये पूर्वोत्तरपक्षौ .... .... २३

प्रधानयाज्यानुवाक्याविधानम्, मन्त्रप्रतिपाद्यदेवताप्रशंसाद्वारेण मन्त्रप्रशंसा .... .... ... २४

मन्त्रगतच्छन्दःप्रशंसनम्, मीमांसा, तेजस्कामस्य ब्रह्मवर्चसकामस्य च स्विष्टकृत्संयाज्याविधानम् .... .... ... २५

वेदनपुरःसरमनुष्ठातुः फलप्रदर्शनम्, फलान्तराय च्छन्दोन्तरविधानम्, गायत्र्या अप्यक्षरचतुष्टये-

पृष्ठाङ्काः

नोष्णिक्छन्दसोऽधिकत्वादायुर्वृद्धिहेतुत्वं युक्तमित्यभिप्रेत्योष्णिगायुषोरभेदकथनम्, वेदनप्रशंसा, स्वर्गकामस्य च्छन्दोन्तरविधानम्, अनुष्टुभोः स्वर्गहेतुत्वोपपादनम् २६

वेदनप्रशंसा, श्रीकामस्य यशस्कामस्य च बृहतीछन्दोविधानम्, श्रीयशसोः कारणत्वेन बृहत्यास्तदुभयरूपत्वप्रदर्शनम्, वेदनप्रशंसा, अहीनसत्राद्युत्तरयज्ञप्राप्तिकामस्य पङ्क्तिच्छन्दोविधानम् .... .... २७

यज्ञस्य पङ्क्तिसंबन्धित्वप्रदर्शनम्, वेदनप्रशंसा, वीर्यादिप्राप्त्यर्थं छन्दोन्तरविधानं वेदनप्रशंसा च.... २८

नित्यसंयाज्याविधानार्थं प्रपञ्चनसहितं विराट्छन्दःप्रशंसनम् ... २९

विराड्विधानम्, दीक्षितस्य सत्यवदनविधानम् .... ... ३०

सत्यवदनफलसिद्ध्यर्थं प्रकारान्तरविधानम्, विचक्षणेतिमन्त्रस्य सत्यवदनपूर्तिहेतुत्वप्रतिपादनम् ३१

पूर्वोक्तविध्युपसंहारः ... ३२

———

## द्वितीयोऽध्यायः।

प्रायणीयशब्दार्थोक्तिः, प्रायणीयोदयनीयकर्मविशेषयोः सह प्रशंसा, देवताविशेषविधानायाऽऽख्यायिका .... .... .... ३३

पथ्यायागविधानं प्रशंसा च ३४

अग्नियागविधानं तत्प्रशंसनं च, प्रशंसायुतं सोमयागविधानम् .... ३५

सप्रशंसं सवितृयागविधानम्, अदितियागविधिः प्रशंसा च .... ३६

उक्तदेवतागतसंख्याप्रशंसा, वेदनप्रशंसा, प्रायणीयेष्टिगतप्रयाजानां काम्यप्रकारविशेषविधानम्, वेदनप्रशंसा .... ... ... ३७

अन्नाद्यकामस्य दक्षिणापवर्गत्वविधिः प्रशंसा च, पशुकामस्य प्रत्यगपवर्गत्वविधिः प्रशंसायुतः, अहीनाद्युत्तरक्रतुषु सोमपानं कामयमानस्योत्तरापवर्गत्वविधानं सप्रशंसम्, स्वर्गकामस्याऽऽहवनीये प्रयाजहोमविधेरर्थवादेनोन्नयनम्.... ... ३८

वेदनप्रशंसा, प्रायणीयदेवतास्तुतिः.... .... ... ... ३९

अग्नीषोमयोश्चक्षुःस्वरूपत्वे कोऽतिशय इत्याशङ्कायाः समाधानम्, अदितेः प्रतिष्ठाहेतुत्वप्रपञ्चनम् .... ४०

प्रायणीयेष्टिदेवतानां याज्यानुवाक्ये क्रमेणाभिसंधातुं प्रस्तावः ४१

पथ्यादेवतायाः पुरोनुवाक्याविधिः, ऋक्स्थमरुच्छब्दप्रदर्शनेन देवविट्कल्पनकथनम्, छन्दोबाहुल्यमभिधाय प्रशंसा, पञ्चानां देवानां मन्त्रविशेषाणां मन्त्रच्छन्दसां च क्रमेणोदाहरणम् .... ... ४२

छन्दस्त्रयस्यैव कथनमित्याशङ्कायाः समाधिः, वेदनप्रशंसा .... ४३

उदाहृतयाज्यानुवाक्याप्रशंसनम्,

पृष्ठाङ्काः

अन्वयव्यतिरेकाभ्यां गरुच्छन्दस्तात्पर्यप्रदर्शनम् .... .... ... ४४

वेदनप्रशंसा, संयाज्याविधानं तत्प्रशंसा च, ऋग्गताक्षरसंख्याप्रशंसा... .... .... .... ४५

प्रयाजानूयाजविषये पूर्वोत्तरपक्षौ.... .... ... ... ४६

पत्नीसंयाजसमिष्टयजुर्निषेधः, प्रायणीयनिष्कासस्थापनादिविशेषविधानम् .... .... ... ४७

प्रकारान्तरकथनम्, प्रायणीयोदयनीयेष्ट्योर्याज्यानुवाक्याव्यत्यासविधानार्थं प्रस्तावः, व्यत्यासविधानम् .... .... .... ४८

व्यतिषङ्गवेदनप्रशंसा, प्रायणीयोदयनीययोरदितिदेवताकचरुप्रशंसा, तत्र दृष्टान्तकथनम् .... ४९

प्रायणीयपथ्याख्यप्रथमदेवताया उदयनीयेऽर्थवादेनोत्तमात्वोन्नयनम्, मीमांसाश्लोकौ.... ... ... ५०

---

## तृतीयोऽध्यायः।

सोमक्रयणदिग्विधानम्, सोमविक्रयिणः प्रत्यवायकथनम् ... ५१

क्रयादूर्ध्वं प्राचीनवंशं प्रति नीयमाने सोमे पठितव्यानामृचामष्टसंख्याप्रशंसनम्, एतद्वेदनप्रशंसा, ऋचामष्टसंख्याविधानम् ... ५२

मन्त्रान्विधातुं प्रैषमन्त्रविधिः, भद्रादभीतिमन्त्रविधिस्तद्व्याख्यानं च .... ... ... .... ५३

पृष्ठाङ्काः

सोमप्रवहणाङ्गमन्त्रविधिस्तद्गतानां केषांचिद्व्याख्यानं प्रशंसा च ५४—५८

वारुण्या समापनकारणकथनम् ५९

अष्टानामृचां प्रशंसा, आद्यन्तयोर्ऋचोरावृत्तिविधानम्, आवृत्तिसहितर्क्संख्याप्रशंसा, वेदनप्रशंसा, आवृत्तिप्रशंसा.... .... .... ६०

सोमस्य शकटावरोहणविधानम्, उभयोरनडुहोर्विमोचने दोषोपन्यासः, अनडुद्द्वयस्य शकटयोगेऽपि दोषवचनम् .... .. .... ६१

आख्यायिकामुखेन सोमोपावहरणस्येशानदिग्विधानम्, सोमस्य जयहेतुत्वप्रदर्शनम् .... ६२

वेदनप्रशंसा, आतिथ्येष्टिविधानम् ... .... .... .... ६३

हविर्विशेषविधिः, देवताविधानम् .... .... ... ... ६४

शाखान्तरोक्तनिर्वापमन्त्रान्हृदि निधाय तत्प्रशंसारूपार्थवादप्रदर्शनम्, अग्निमन्थनविधिः ... .... ६५

मीमांसाश्लोकौ, अग्निमन्थनोपयुक्तर्ग्विधानार्थं प्रैषमन्त्रविधानम्, प्रथमर्ग्विधानम्, प्रैषानुवचनमन्त्रयोर्वैयधिकरण्यरूपचोद्योद्भावनं तदुत्तरं च .... .... ... .... ६६

द्वितीयर्ग्विधानम्, चोद्यपरिहारप्रदर्शनम्, तृतीयादिऋक्त्रयविधानम्, प्रथमर्ग्गतद्वितीयपादप्रशंसा .... .... .... .... ६७

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| नैमित्तिकर्ग्विधानम्, ऋक्प्रतीकग्रहणम्, ऋगनुवचनप्रयोजनकथनम्, षष्ठर्ग्विधानम्, ... ... | ६८ |
| सप्तमर्ग्विधिः, ऋग्गतहस्तशब्दस्य विवक्षितार्थप्रदर्शनम्, ऋग्गतपदतात्पर्यप्रदर्शनम्.... ... | ६९ |
| अष्टमर्ग्विधानम्, अस्या ऋचः प्रह्रियमाणाभिरूपत्वे यज्ञाङ्गसमृद्धिरूपप्रयोजनप्रदर्शनम् .... .... | ७० |
| ऋक्तृतीयपादगतयोनिशब्दव्याख्यानम्, नवमर्ग्विधानम्, ऋग्व्याख्या ... .... .... | ७१ |
| दशमर्ग्विधिः, आनुरूप्यप्रशंसा, एकादशर्ग्विधिः, तृतीयपादव्याख्या, द्वादशर्ग्विधिः ... .... .... | ७२ |
| क्षयशब्दार्थकथनम्, त्रयोदशर्ग्विधिः, प्रथमपादव्याख्या, अवशिष्टपादत्रयपाठः .... .... | ७३ |
| चतुर्थपादतात्पर्यप्रदर्शनम्, आहवनीयाग्नौ मथिताग्निप्रक्षेपलक्षणाहुतेः प्रशंसा, स्मृत्युक्तषडब्राह्मणप्रदर्शनम् ... .... .... | ७४ |
| वेदनप्रशंसा, न्यूनाधिकसंख्याभ्रमव्युदासाय विहितर्क्संख्याप्रदर्शनम्, आद्यन्तर्गावृत्तिविधेरावृत्तसंख्याप्रशंसाया वेदनप्रशंसाया आवृत्तिप्रशंसायाश्च प्रदर्शनम् .... | ७५ |
| इष्टिशेषविधिः, आक्षेपसमाधाने | ७६ |
| आज्यभागयाज्याविधानम्, प्रधानहविर्याज्यानुवाक्याविधिः .... | ७७ |
| संयाज्याविधानम्, मन्त्रद्वयगतच्छन्दःप्रशंसा, इडाभक्षणादूर्ध्वभाविकर्मणो वारणम्, अनुयाजनिषेधः, अनुयाजयजने दोषप्रकटनम्... .... ... .... | ७८ |
| दोषान्तरप्रकटनम्, अनुयाजानामनुष्ठानाभावे कर्माङ्गसाकल्यलक्षणः फलविशेषो न प्राप्येतेत्याशङ्कासमाधानम्, मीमांसा ... | ७९,८० |

## चतुर्थोऽध्यायः।

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| प्रवर्ग्यादिकथनार्थमाख्यायिका | ८१ |
| हविरादिसाधनसंपादनविधानम्, अध्वर्युप्रतिप्रस्थात्रोरनुज्ञापनप्रैषमन्त्रयोर्विधिः ... .... | ८२ |
| होतुरभिष्टवार्थानामृचां विधानम् .... .... .... | ८३,८४ |
| एकविंशतिसंख्याप्रशंसा, स्रके द्रप्सस्येति सूक्तान्तर्गतनवसंख्याकपवमानदेवतर्ग्विधिः .... .... | ८५ |
| अयं वेनश्चोदयदित्यृग्विधानम्, पवित्रं ते विततमित्यृग्द्वयस्य सूत्रकारपठितशाखान्तरगतवियत्पवित्रमिति ऋचश्च विधानं प्रशंसा च.... | ८६ |
| गणानां त्वेत्येकोनविंशत्यृचसूक्तविधानम्, प्रथश्च यस्येति तृचात्मकसूक्तान्तरविधिः, अपश्यं त्वा मनसेति सूक्तात्मकतृचान्तरविधिः | ८७ |
| सूक्तान्तरगतनवसंख्यर्ग्विधानमुत्तमलोकप्राप्तिहेतुत्वेन तत्प्रशंसा च | ८८ |

विषयाः पृष्ठाङ्काः

वेदनप्रशंसा, आभात्यग्निरिति पञ्चर्चसूक्तान्तरविधिः सूक्तप्रशंसा च, सूक्तगतच्छन्दःप्रशंसा, ग्रावाणेवेत्यष्टर्चसूक्तान्तरविधिस्तद्गतच्छन्दःप्रशंसा च, ईळे द्यावापृथिवी इति पञ्चविंशत्यृचसूक्तान्तरविधानम् ८९

प्रथमर्ग्गतद्वितीयपादोदाहरणद्वारा सूक्तप्रशंसा, सूक्तगतच्छन्दःप्रशंसा, सूक्तार्थमुपजीव्य सूक्तप्रशंसा .... .... .... .... ९०

अरूरुचदुषस इत्यृग्विधिः, सूक्तान्तिमयर्चाऽभिष्टवपूर्वभागसमापनविधानम्, अन्तिमर्क्तात्पर्यप्रदर्शनम्, अभिष्टवपूर्वभागोपसंहारः ९१

उत्तरभागवचनप्रतिज्ञा, प्रतीकग्रहणेनैकविंशतिसंख्याकर्ग्विधानम् .... .... .... .... ९२

उदुष्य देव इति षडृचां प्रतीकग्रहणपूर्वकं विनियोगप्रदर्शनम् ९३

विनियोगसहितो मन्त्रान्तरविधि, पूर्वाह्णयाज्यापाठवदपराह्णे याज्याविधानम् .... .... .... ९४

मुख्यस्विष्टकृद्रहितत्वात्तल्लोपमाशङ्क्य परिहारकथनम्, ब्रह्मणः शाखान्तरप्रसिद्धमन्त्रजपविधिः, होमादूर्ध्वं होत्रा पठनीयानां सप्तानामृचां विधानम्, होतुरेकयर्चा प्रवर्ग्यहविःशेषभक्षणप्रतीक्षाविधानम् .... .... .... .... ९५

समन्त्रकभक्षणविधानम्, प्रवर्ग्यपात्रासादनकाले होतुर्मन्त्रद्वयविधानम्, प्रवर्ग्योद्वासनदिनेऽन्तिमर्चः प्राग्वविर्हविष्म इति ऋचः पठनविधिः .... .... .... ९६

सूयवसाद्भगवती हीत्यनयर्चाऽभिष्टवसमाप्तिविधिः, प्रवर्ग्यकर्मणः प्रशंसार्थं मिथुनव्यापाराकारेण रूपकप्रदर्शनम् .... .... .... ९७

उक्तार्थवेदनस्य तद्वेदनपूर्वकानुष्ठानस्य च प्रसंसा, उपसदाख्यकर्मकथनार्थं देवासुरसंग्रामकथनम् .... .... .... .... ९८

उपसदाख्यहोमानुष्ठानेन देवविजयप्रकारप्रदर्शनम् .... ९९, १००

एकैकस्मिन्दिन एकैकस्या उपसदो द्विरनुष्ठानाय कालद्वयविशेषविधानम्, मीमांसाश्लोकौ ... १०१

उपसत्प्रशंसा, वेदनप्रशंसा, तानूनप्त्रनामनिर्वचनार्थमाख्यायिका १०२

असुरेभ्यो भयनिवारणार्थं देवकृतसमयप्रदर्शनम् .... ... १०३

तानूनप्त्रनिर्वचनम्, सतानूनप्त्रिणा द्रोहस्य त्याज्यत्वकथनम् ... .... ... १०४

आतिथ्याकर्मण्यास्तीर्णबर्हिष उपसत्स्वनुवृत्तिविधिः, उपसत्सु द्रव्यदेवताविधानार्थं प्रस्तावः .... १०५

उपसद्द्रव्यदेवताविधिः, उपसदङ्गव्रतोपायनविधिः, द्वितीयोपसद्दिने प्रातःसायंकालयोस्तृती-

| विषयाः | पृष्ठाङ्काः |
|---|---|
| यदिनप्रातःकाले चैकैकन्यूनस्तनसंख्याविधानम्, यथोक्तसंख्याविशेषप्रशंसा .... ... ... | १०६ |
| पूर्वाह्णापराह्णव्यवस्थितसामिधेनीविधिः, जग्निवद्याज्यानुवाक्याविधिः, पूर्वाह्णपुरोनुवाक्यानामपराह्णपुरोनुवाक्यत्वस्य च विधानम् | १०७ |
| यथोक्तयाज्यानुवाक्यायुक्तोपसत्प्रशंसा, उदाहृतयाज्यानुवाक्यास्वैकविधच्छन्दोविशदनम्, वैलक्षण्ये बाधवचनम्, उपसदामाज्यहविष्कत्वप्रशंसा ... .... | १०८ |
| उक्तविषयमीमांसा .... .... | १०९ |
| उपसत्सु प्रयाजानुयाजनिषेधः, अग्नीषोमविष्णुरूपाणां देवानां बहुत्वेनाऽऽश्रावणार्थमुत्तरदेशादाहवनीयस्य दक्षिणदेशं प्रति प्राप्तस्यासकृदतिक्रमणस्यापसत्स्थैर्यार्थं वारणम् | ११० |
| क्रूरकर्मपरिहाराय प्रस्तावपूर्वकं समन्त्रकसोमाप्यायनविधिः .... | १११ |
| समन्त्रकनिह्नवविधानम्, मीमांसाश्लोकौ .... ... ... | ११२ |

---

**पञ्चमोऽध्यायः।**

| विषयाः | पृष्ठाङ्काः |
|---|---|
| सोमक्रयं वक्तुं सोमाख्यायिका, सोमक्रयविधिः .... | ११३, ११४ |
| मूल्यत्वेन सोमविक्रयणे दत्ताया गोः पुनर्मूल्यान्तरदानेन स्वीकरणविधानम्, मन्त्राणां मन्द्रध्वनिविधानम्, मीमांसा, अग्निप्रणयनीयर्ग्विधानार्थं प्रैषमन्त्रविधिः | ११५ |
| होत्राऽनुवक्तव्यास्वष्टास्वृक्षु प्रथमर्ग्विधिः प्रशंसा च, क्षत्रिययजमानयोगेऽन्यर्ग्विधिः प्रशंसा च, ऋग्द्वितीयपादपाठः .... ... | ११६ |
| द्वितीयपादपाठेन ज्ञातिमध्ये यजमानश्रैष्ठ्यप्रदर्शनम्, उत्तरार्धपाठः, उक्तवेदनप्रशंसा, वैश्ययजमानस्यान्यार्ग्विधिः प्रशंसा च .... | ११७ |
| चतुर्थपादमनूद्य प्रशंसा, जातित्रयसाधारणद्वितीयर्ग्विधिः, उपांशुत्वत्यागविधिस्तत्प्रशंसा च, मन्त्रगतप्रथमपादपूर्वभागानुवादपुरःसरं तद्व्याख्या, तृतीयर्ग्विधिः .... | ११८ |
| द्वितीयपादमनूद्य तात्पर्यप्रदर्शनम्, द्वितीयार्धानुवादः, तदर्थविस्पष्टनम्, चतुर्थर्क्पूर्वार्धपाठः, नाभेः पदरूपत्वविशदनम्, तृतीयपादमनूद्य व्याख्यानम् .... ... | ११९ |
| चतुर्थपादमनूद्य व्याख्या, पञ्चमर्क्पूर्वार्धपाठः, तृतीयचतुर्थपादानुवादपूर्वकं व्याख्यानम् .... | १२० |
| षष्ठ्या ऋचः प्रथमपादपाठपुरःसरं व्याख्या, द्वितीयपादमनूद्य तत्रत्ययज्ञशब्दस्य यजमानपरत्वप्रदर्शनम्, उत्तरार्धमनूद्य तत्रत्यवयःशब्दस्य प्राणवाचित्वकथनम्, सप्तमर्क्प्रथमपादमनूद्य व्याख्यानम् | १२१ |
| द्वितीयपादमनूद्यासदिति पदव्याख्या, तृतीयपादमनूद्य वसिष्ठशब्दार्थकथनम्, चतुर्थपादमनूद्य | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| व्याख्या वेदनप्रशंसा च, अष्टमर्ग्विधिः … …. …. | १२२ |
| अवशिष्टपादत्रयपाठः, उक्तार्थर्क्प्रशंसा, ऋचामष्टसंख्याविधिः, आद्यन्तयोर्ऋचोरावृत्तिं विधाय प्रशंसा …. … … | १२३ |
| प्रैषविधानपूर्वकं होत्राऽनुवचनीयहविर्धानप्रवर्तनीयर्ग्विधिः, शङ्कासमाधाने केषांचिन्मन्त्रगतपदानां व्याख्यानं च …. … | १२४–१२७ |
| होतुरेतद्वेदनस्य प्रशंसा, अष्टम्याऽनुवचनसमाप्तिविधानम्, परिधानकालविधानम्, होतुरेतद्वेदनस्य प्रशंसा …. …. …. | १२८ |
| ऋक्संख्यादिप्रदर्शनम् …. | १२९ |
| प्रैषमन्त्रविधिपूर्वकमग्नीषोमप्रणयनीयर्ग्विधानम्। शङ्कासमाधाने केषांचिन्मन्त्रगतपदानां व्याख्या प्रशंसा च …. …. | १३०–१३४ |
| सप्तदश्या समापनविधिः, एतस्याः सोमसंबन्धोक्तिः, नैमित्तिकऋगन्तरस्य विधानम् … | १३५ |
| होतुरेतद्वेदनप्रशंसापूर्वकमेतद्विध्युपसंहारः, मन्त्रगतसंख्यादिप्रदर्शनम् , उक्तसंख्याप्रशंसार्थमेकविंशतिसंख्यापूरण आदित्ये बहुगुणप्रदर्शनम् …. …. …. | १३६ |
| उपसंहारः …. …. | १३७ |

षष्ठोऽध्यायः।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| यूपवचनार्थमाख्यायिकोक्तिः | १३८ |
| यूपनिखननविधानम्, यूपस्य तक्षणेनाष्टाश्रित्वविधानम् , यूपस्योक्तवज्रत्वस्य शत्रोरप्रियहेतुत्वेनोपपादनम् …. …. … | १३९ |
| कामनाविशेषेण यूपप्रकृतिभूतवृक्षविशेषविधिस्तत्प्रशंसा च …. | १४० |
| वेदनप्रशंसा, प्रैषविधानपूर्वकं यूपाञ्जनादिमन्त्रविधिः, केषांचिन्मन्त्रपदानां व्याख्यानं होतुरेतद्वेदनस्य प्रशंसा च …. …. | १४२ |
| सप्तम्या समापनविधिः, युवशब्दार्थकथनम्, द्वितीयपादमनूद्य व्याख्या, उत्तरार्धमनूद्य व्याख्यानम् … …. …. … | १४८ |
| उक्तमन्त्रसंख्यादिप्रदर्शनम् , मीमांसा …. …. …. | १४९ |
| आख्यायिकया पशुकामनायां यूपप्रहरणाभावोपपादनम् , एतद्वेदनयूपावस्थानयोः प्रशंसा …. | १५० |
| स्वर्गकामनायां यूपप्रहरणविधानं तदुपपादनं च, इदानींतनैः स्वर्गकामैः क्रतोर्यूपो न प्रह्रियत इत्याशङ्क्य तेषां प्रतिनिधिप्रदर्शनम् …. …. … …. | १५१ |
| अग्नीषोमीयपश्वालम्भविधानम्, पूर्वोत्तरपक्षाभ्यां पशुशरीरस्य रूपविशेषनिश्चयः …. …. … | १५२ |
| पूर्वपक्षखण्डनपूर्वकं पशुलक्ष- | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| णस्य हविषः शेषभक्षणोपपादनम् | १५३ |
| उक्तविषयमीमांसा ... .... | १५४ |
| अग्नीषोमीयपशुसंबन्ध्येकादशप्रयाजविधानम्, तत्प्रशंसा, प्रथमप्रयाजविधिः .... .... | १५५ |
| समिद्देवताप्रशंसा, तद्देवताविषयद्वितीययाज्याविधानम् ... | १५६ |
| द्वितीयप्रयाजयाज्यान्तरविधिः, तृतीयादिप्रयाजयाज्याविधानम् | १५७, १५८ |
| दशतो बहुविधानामाप्रीसूक्तानामाम्नातत्वाद्विकल्पः स्यादित्याशङ्क्याधिकारिभेदेन व्यवस्थाविधानम् ... .... .... .... | १५९ |
| पर्यग्निकरणविधानार्थं प्रैषमन्त्रविधिः, मैत्रावरुणेनानुवक्तव्यानां तिसृणां पर्यग्निकरणर्चां विधानम्, प्रथमार्ग्द्वितीयपादमनूद्य व्याख्यानम्, द्वितीयर्चः पूर्वार्धमनूद्य तात्पर्यप्रदर्शनम्, तृतीयर्चः प्रथमपादमनूद्य व्याख्यानम् ... .... ... | १६० |
| होतारं प्रति मैत्रावरुणप्रैषार्थं मैत्रावरुणं प्रत्यध्वर्योः प्रैषमन्त्रविधिः, मैत्रावरुणेन पठनीयमन्त्रविधानम्, अत्र वैयधिकरण्यरूपब्रह्मवादिचोद्योद्भावनम्, चोद्यपरिहारः ... | १६१ |
| होतुरध्रिगुप्रैषविधानम्, प्रैषमन्त्रप्रथमपादव्याख्यानम्, तद्द्वितीयभागानुवादः.... ... | १६२ |
| मेधमेधपतिशब्दयोर्व्याख्यानम्, मतान्तरानुसारेण मेधपतिशब्दार्थप्रदर्शनम्, मेधपतिशब्दस्य देवतापरत्वे को लाभ इत्याशङ्कासमाधानम्, तृतीयभागानुवादः, अग्नेः प्रथमतो नयनोपपादनार्थमाख्यायिका | १६३ |
| उक्तार्थस्य लोकप्रसिद्ध्या दृढीकरणम्, पशोराग्नेयत्वप्रसिद्ध्या पशोः पुरस्तादग्निनयनविधानम्, चतुर्थादिनवमान्तभागाननूद्य व्याख्यानम् ... .... | १६४, १६५ |
| उक्तविषयमीमांसा .... | १६६, १६९ |
| अध्रिगुप्रैषमन्त्रस्य दशमभागमनूद्य व्याख्यानम् ... .... | १७० |
| अस्नेति मन्त्रभागस्य पाठ आक्षेपः | १७१ |
| उक्ताक्षेपस्योपपत्तियुतं समाधानम्, मन्त्रदशमभागकीर्तन उपांशुत्वविशेषस्य विधानम्, विपक्षे बाधप्रदर्शनम् ... .... .... | १७२ |
| एतद्वेदनप्रशंसा, एकादशं भागमनूद्य व्याख्यानम् ... .... | १७३ |
| द्वादशं भागमनूद्य व्याख्यानम्, अध्रिगुमन्त्रपाठान्तरं जपविधानम् | १७४ |
| एतद्वेदनप्रशंसा, मीमांसा .... | १७५ |
| अध्रिगुप्रैषसमाप्त्यनन्तरं पुरोडाशविधानार्थं देवानां बहुपर्याययुताख्यायिकाकथनम् .... ... | १७६ |
| अजप्रशंसनम्, पञ्चमपर्यायप्रदर्शनम्, किंपुरुषादीनां मेधराहित्याद्यज्ञियत्वाभावकथनपुरःसरं तन्मांसभक्षणनिषेधः, पुरोडाशविधानम्, | १७७ |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| वेदनप्रशंसा, मीमांसा .... | १७८ |
| पशुशरीरसादृश्यादनुष्ठितपुरोडाशस्य पश्चालम्भत्वकथनेन प्रशंसा, तत्सादृश्यविशदनम् ... | १७९ |
| पुरोडाशयागस्यैव सर्वपशुसंबन्धियज्ञयोग्यहविर्यागत्वस्य कथनम्, लौकिकोक्त्या पुरोडाशयागप्राशस्त्यदृढीकरणम्, वपादीनां क्रमेण याज्याकथनार्थं वपायाज्याविधानम्, पूर्वोत्तरपक्षाभ्यामुक्तयाज्याप्रशंसनम् .... .... .... | १८० |
| पुरोडाशयाज्याविधानम्, द्वितीयपादमनूद्य पादद्वयतात्पर्यप्रदर्शनम्, पुरोडाशसंबन्धिस्विष्टकृद्याज्याविधानम् ... .... | १८१ |
| उक्तयाज्याप्रशंसनम्, पुरोडाशीयस्विष्टकृद्यागादूर्ध्वं पशुपुरोडाशसंबन्धीळोपाह्वानविधानम्, हृदयाद्यङ्गरूपप्रधानहविरवदानकाले सूक्तविधानार्थं प्रैषमन्त्रविधानम्, मैत्रावरुणपठनीयस्य त्वं ह्यग्ने प्रथमो मनोतेति सूक्तस्य विधानम् .... | १८२ |
| चोद्यसमाधाने, हृदयाद्यङ्गरूपप्रधानहविर्याज्याविधानम्, एतद्याज्याया हविरानुकूल्यप्रदर्शनम्... | १८३ |
| वेदनप्रशंसा, वनस्पतियागविधानम्, यष्टृवेदनप्रशंसा, स्विष्टकृद्यागविधानम्, इळोपाह्वानविधानम् | १८४ |
| मीमांसा ... .... .... | १८५ |


———


| विषयाः | पृष्ठाङ्काः |
| --- | --- |


## सप्तमोऽध्यायः ।


| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| सप्तमाध्याये पशुप्रैषप्रातरनुवाकवचनार्थं देवानां पर्यग्निकरणस्तुत्यर्थाऽऽख्यायिका... .... | १८५ |
| पर्यग्निकरणविधानम् .... ... | १८६ |
| पर्यग्निकरणादूर्ध्वं पशोः शामित्रदेशं प्रत्यानयनविधानम्, नीयमानपशोः पुरत आग्नीध्रकर्तृकोल्मुकनयनस्य विधानम्, पशोः पुरतो वह्निनयनस्य प्रशंसा ... .... | १८७ |
| शामित्रदेशं प्रति नीतस्य पशोर्हननस्थले बर्हिष्प्रक्षेपविधानम्, पशोरधोबर्हिष्प्रक्षेपस्य प्रशंसा, पशोः पुरीषस्थापनार्थमवटखननविधानम्, ऊवध्यगोहखननप्रशंसा, पशुपुरोडाशं प्रशंसितुं प्रश्नोत्थापनम् .... | १८८ |
| पूर्वोक्तप्रश्नस्योपपादनयुतोत्तरकथनम्, वेदनप्रशंसा च .... | १८९ |
| स्तोकानुवचनीया विधातुं प्रैषमन्त्रविधानम्, प्रैषिकस्य तात्पर्यप्रदर्शनम्.... ... .... ... | १९० |
| स्तोकानुवचनविधानम्, प्रथमर्ग्द्वितीयतृतीयपादानुवादः, आसनीति पदाभिप्रायप्रदर्शनम्, इमं नो यज्ञमिति पञ्चर्चसूक्तविधानम्, द्वितीयतृतीयपादावनूद्य व्याख्यानम् | १९१ |
| चतुर्थपादमनूद्य व्याख्यानम्, उक्तसूक्तद्वितीयर्चः पूर्वार्धमनूद्य व्याख्यानम्, उत्तरार्धमनूद्य व्या- | |

विषयाः पृष्ठाङ्काः

ख्यानम्, तृतीयर्चः पूर्वार्धमनूद्य व्याख्यानम् .... .... .... १९२

उत्तरार्धमनूद्य व्याख्यानम्, चतुर्थ्या ऋचः पूर्वार्धमनूद्य व्याख्यानम्, उत्तरार्धमनूद्य व्याख्यानम्। पञ्चमर्क्पादचतुष्टयानुवादः १९३

पञ्चममन्त्रतात्पर्यप्रदर्शनम्, स्तोकप्रशंसा, वपाप्रशंसां हृदि निधाय तदुपयोगिप्रश्नोत्थापनम्, उक्तप्रश्नोत्तरवचनम् .... १९४

तथाविधप्रश्नान्तरोत्थापनम्, उपपादनयुतं तदुत्तरकथनम्, वपाहोमप्रशंसार्थमाख्यायिकाकथनम् १९५

वपायाः सर्वदेवहविष्ट्वाभिधानेन श्रुतिकर्तृका साक्षात्प्रशंसा, सुत्यादिने सवनीयपशोर्वपां प्रातःसवने हुत्वा शिष्टानि हृदयाद्यङ्गानि तृतीयसवने पक्त्वा यजमाना जुह्वति वपामात्रस्य पशुस्वरूपत्वे तृतीयसवने पशुशेषं जुह्वतां कोऽभिप्राय इत्याशङ्क्याधिकं नैव दोषायेति लौकिकन्यायेन तृतीयसवने पश्वङ्गहोमो न तु वपायां न्यूनत्वबुद्ध्येत्युत्तरकथनम् ... .... १९६

वेदनप्रशंसा, आज्याद्याहुतीनां प्राशस्त्यप्रसिद्धेस्तद्वद्वपाहुतिरपि प्रशस्तेति विवक्षया तत्सहितवपाहुतिप्रशंसा, प्रकारान्तरेण वपाप्रशंसा १९७

यजमानस्य चतुरवत्तित्वेऽपि वपायाः पञ्चावत्तात्वविधानम्, पञ्चानामप्यवदानानां विभज्य प्रदर्शनम्; हिरण्यरहितस्य प्रकारान्तरेण प्रश्नोत्तराभ्यां पञ्चावदानप्रदर्शनम् .... ... .... .... १९८

आज्यस्य हिरण्यप्रतिनिधित्वोपपादनम्, अवदानगतपञ्चसंख्याप्रदर्शनम्, प्रातरनुवाकविधानार्थं प्रैषविधानम् .... .... ... १९९

प्रैषमन्त्रव्याख्या, एतद्वेदनप्रशंसा.... .... ... .... २००

प्रैषमन्त्रे देवेभ्योऽनुब्रूहीति यदुक्तं तदुपपादनार्थं प्रातरनुवाकस्य देवसंबन्धविशदनम्, प्रातरनुवाकस्य देवोत्कर्षहेतुत्वस्य तदभावस्यासुरपराभवहेतुत्वस्य च कथनम्, वेदनप्रशंसा, प्रातरनुवाकशब्दनिर्वचनप्रदर्शनम्, प्रातरनुवाकस्य कालविशेषविधानम् ... २०१

पाश्चात्ययामेऽपि विशेषविधानम्, विपक्षे बाधककथनम्, स्वपक्षनिगमनम्, विशेषान्तरविधानम् २०२

विशेषोपपादनम्, पक्षान्तरविधानम्, पक्षान्तरोपपादनम् .... २०३

प्रातरनुवाकप्रथमर्ग्विधानार्थमाख्यायिका, अर्थवादेन विध्युन्नयनम् .... .... .... .... २०४

वेदनप्रशंसा, आपो रेवतीरित्येतस्या ऋच आख्यायिकया प्रशंसनम्.... .... ... .... २०५

वेदनप्रशंसा, आपो रेवतीरिति

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ऋचस्त्रिरावृत्तिविधानम्.... .... | २०६ |
| आयुरर्थं प्रातरनुवाकगतर्चां शतसंख्याविधानम्, अहीनरात्राद्युत्तरक्रतुकामस्य संख्यान्तरविधानम्, होतुर्वेदनप्रशंसा, प्रजापशुकामस्य पूर्वसंख्यायाः द्विगुणसंख्याविधानम् | २०७ |
| वेदनप्रशंसा, दुर्ब्राह्मणत्वपरिहारकामस्य संख्यान्तरविधानम्,.... | २०८ |
| वेदनप्रशंसा, स्वर्गकामस्य संख्यान्तरविधानम्, सर्वकामसिद्ध्यर्थमियत्तापरिच्छेदराहित्यसंख्याविधानम्, वेदनप्रशंसा .... .... | २०९ |
| बहुफलहेतुत्वादपरिमितपक्षस्याऽऽदरेण निगमनम्, प्रातरनुवाकगतास्वृक्षु छन्दोविशेषाणां विधानम्, वेदनप्रशंसा, प्रातरनुवाकद्वितीयभागेच्छन्दोविधानम्, वेदनप्रशंसा, तृतीयभागेच्छन्दोविधानम् | २१० |
| भागत्रये देवतात्रयविधानम्, प्रातरनुवाकस्यानुवचनप्रकारविशेषं निर्णेतुं प्रश्नावतार उत्तरं च ... | २११ |
| द्वितीयविचारे पूर्वोत्तरपक्षौ प्रातरनुवाकक्रममाक्षिप्य समाधानम्.... | २१२ |
| प्रातरनुवाकप्रशंसा, वेदनप्रशंसा, विभिन्नप्रीतिनिमित्ते दृष्टान्तमभिप्रेत्य सोमपशुप्रशंसा... .... | २१३ |
| वेदनप्रशंसा, प्रातरनुवाकोत्तमर्ग्विधानम्, समापन आक्षेपः .... | २१४ |
| समाधानप्रदर्शनम्... .... | २१५ |

अष्टमोऽध्यायः ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| अपोनप्त्रीयादिवचनार्थमृषिसत्राख्यायिकाकथनम् .... .... | २१६ |
| आख्यायिकोक्तार्थस्य लोकप्रसिद्ध्या दृढीकरणम्, सत्रानुष्ठायिऋषिकृत्यप्रदर्शनम्, एतद्वेदनपूर्वकानुष्ठानप्रशंसा, अपोनप्त्रीयसूक्ते प्रातरनुवाकवत्प्रसक्तस्यार्धर्चावसानस्य वारणार्थं नैरन्तर्यविधानम्... | २१७ |
| होतृवेदनप्रशंसा, विपक्षे बाधकपूर्वकं स्वपक्षोपसंहारः, एतत्सूक्ते प्रथमर्च आवृत्तिसहितसांतत्यविधानम्, सूक्तवचनेऽनन्तरायविधानम्, हिनोता न इत्यस्या दशमीत्वविधानम्... ... .... ... | २१८ |
| आवर्वृततीरिति ऋचोऽनुवचनकालविशेषविधानम्, ऋगन्तरकालविधानम् ... .... .... | २१९ |
| समन्यायन्त्युपेति ऋचः कालविधानम्, उक्तकर्प्रशंसार्थमाख्यायिकाकथनम् ... .... .... | २२० |
| वेदनप्रशंसा, ऋगन्तरकालविधानम्, होतुर्यजुरात्मकमन्त्रविधानम्, उक्तमन्त्रव्याख्या, अध्वर्योः प्रत्युत्तरमन्त्रविधानम् ... .... | २२१ |
| अध्वर्योरुत्तरमन्त्रव्याख्या, निगदरूपमन्त्रेण होतुः प्रत्युत्थानविधानम्, एतन्मन्त्रसाध्यप्रत्युत्थानोपपादनम् .... .... ... | २२२ |
| अनुवर्तनस्यापि कर्तव्यत्वविधा- | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| नं तदुपपादनं च, यजमानस्यैवानुव्रजनं युक्तं न तु होतुरित्याशङ्कासमाधानम्, अनुगमनकाले वक्तव्यविधानम्, अम्बयो यन्तीति ऋचो द्वितीयतृतीयपादानुवादः .... | २२३ |
| एतदृग्गतमधुशब्दतात्पर्यप्रदर्शनम्, फलविशेषाय ऋगन्तरविधानम्, ऋक्त्रयविध्युपसंहारः, वेदनप्रशंसा .... ... .... | २२४ |
| ऋगन्तरकालविधानम्, ऋगन्तरेण समाप्तिविधानम्, उपांश्वन्तर्यामहोमपर्यन्तं होतुर्वाङ्‌नियमविधानम् .... ... ... | २२५ |
| विपक्षबाधकपूर्वकं स्वपक्षोपसंहारः, उपांश्वन्तर्यामहोमादूर्ध्वं होतुर्वाग्विसर्गप्रकारविधानम् ... | २२६ |
| उपांशुसवनाभिमर्शनोपपादनम्, वेदनप्रशंसा .... .... .... | २२७ |
| होतुः प्रसर्पणस्य निवारणार्थं पूर्वपक्षोपन्यासः, पूर्वपक्षनिराकरणम्, विपक्षे बाधकप्रदर्शनम् ... | २२८ |
| होतृकर्तृकानुमन्त्रणविधानम्, अनुमन्त्रणमन्त्रप्रदर्शनम्, अनुमन्त्रणमन्त्रप्रशंसा, मन्त्रान्तरविधानं तत्प्रशंसा च, वेदनप्रशंसा .... | २२९ |
| पयस्याप्रशंसार्थमाख्यायिका, सवनीयपुरोडाशान्विधातुं कथाप्रदर्शनम् .... .... .... ... | २३० |
| सवनीयपुरोडाशविधानम्, पुरोडाशशब्दनिर्वचनम्, पुरोडाशस्वरूपनिर्धारणार्थं पूर्वपक्षकथनम् ... | २३१ |
| सिद्धान्तप्रदर्शनम्, पुरोडाशशेषभक्षणे पूर्वपक्षोपन्यासः, पूर्वपक्षं निराकृत्य सिद्धान्तप्रदर्शनम् .... | २३२ |
| वेदनप्रशंसा, विहितसवनीयपुरोडाशानां धानादिरूपत्वप्रशंसया धानादिरूपत्वविध्युन्नयनम् .... | २३३ |
| अनेनैव न्यायेन सुमत्पद्वग्द इति पञ्चाक्षराणां होतृजपादौ प्रयोक्तव्यत्वविध्युन्नयनप्रदर्शनम्, पञ्चविधनाराशंसविध्युन्नयनप्रदर्शनम् | २३४ |
| सवनपङ्क्तिप्रदर्शनम्, सवनीयपुरोडाशानां क्रमेण याज्याविधानम् .... ... .... .... | २३५ |
| उक्तयाज्याव्याख्यानं होतुरुक्तयाज्यावेदनप्रशंसा च .... | २३६ |
| सवनीयपुरोडाशसंबन्धिस्विष्टकृद्याज्याविधानं तत्प्रशंसा च .... | २३७ |


नवमोऽध्यायः ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| ऐन्द्रवायवादिद्विदेवत्यग्रहविधानार्थमाख्यायिका, धावने वायोरिन्द्रस्य च परस्परसंवादप्रदर्शनम् | २३८ |
| विजयक्रमेण सोमपानक्रमप्रदर्शनम्, ऐन्द्रवायवग्रहविधानम्, उक्तभागविशेषस्य मन्त्रसंवादेन दृढीकरणम् ... .... ... | २३९ |
| उक्तार्थस्य लोकव्यवहारेण .... दृढीकरणम्, ऐन्द्रवायवमैत्रावरुणा- | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| श्विनाख्यद्विदेवत्यग्रहाणां प्राणरूपत्वेन प्रशंसनम्, तेषां प्राणरूपत्वस्य विभज्य प्रदर्शनम् .... .... | २४० |
| ऐन्द्रवायवग्रहयाज्यानुवाक्ये विधातुं पूर्वोत्तरपक्षौ .... .... | २४१ |
| याज्यापुरोनुवाक्यासाम्यपक्षे पूर्वपक्ष्यभिप्रेतप्रयोजनं कथं सिध्येदित्याशङ्कायाः समाधानम् ... | २४२ |
| द्विदेवत्यानामैन्द्रवायवमैत्रावरुणाश्विनग्रहाणां ग्रहणहोमयोः पात्रवैषम्यविधानम् .... ... | २४३ |
| होतुर्ग्रहशेषभक्षप्रतिग्रहमन्त्रविधानम्, होतुः समन्त्रकभक्षविधानम्, मन्त्रावशिष्टभागपाठः .... | २४४ |
| उक्तभागतात्पर्यप्रदर्शनम्, मैत्रावरुणग्रहस्य समन्त्रकशेषभक्षणमन्त्रशेषव्याख्यानयोः प्रदर्शनम्, आश्विनग्रहशेषस्य समन्त्रकभक्षणमन्त्रशेषव्याख्यानयोः प्रदर्शनम्.... | २४५ |
| भक्षणे कस्यचिद्विशेषस्य विधानम्, द्विदेवत्यग्रहेषु होत्रा प्रयोक्तव्यमन्त्राणां मध्येऽनुच्छ्वासविधानम् .... .... .... .... | २४६ |
| प्रसक्तानुवषट्कारमन्त्रनिषेधः, विपक्षे बाधपुरःसरं स्वपक्षनिगमनम्, ऐन्द्रवायवे विशेषोक्त्यर्थं प्रश्नोत्थापनम् .... .... .... | २४७ |
| द्वितीययाज्यादौ मा भूदेवाऽऽगूरित्युत्तरस्य विपक्षबाधपूर्वकं प्रदर्शनम्, तत्रैव युक्त्यन्तरवचनम् .... | २४८ |
| ऋतुग्रहयागविधानम्, आद्यषड्ऋतुग्रहेषु कस्यचिद्विशेषस्य विधानम्, सप्तमादिदशमान्तग्रहेषु विशेषविधानम्, एकादशद्वादशयोर्विशेषविधानम् .... .... .... | २४९ |
| ऋतुयाजप्रशंसनम्, ऋतुयाजेष्वनुवषट्कारनिषेधः, विपक्षबाधकपूर्वकं स्वपक्षोपसंहारः .... ... | २५० |
| इळोपह्वानग्रहशेषभक्षणक्रमविधानम्, इडाप्राशनहोतृचमसभक्षणयोर्विचारपुरःसरं पौर्वापर्यनिश्चयस्तदुपपादनं च .... .... | २५१ |
| द्विदेवत्यग्रहशेषबिन्दोर्होतृचमसे प्रक्षेपविधानम्, वेदनप्रशंसा, तूष्णींशंसविधानार्थमितिहासः .... | २५२ |
| तूष्णींशंसस्यासुरविनाशहेतुत्वप्रदर्शनम्, एतद्वेदनप्रशंसा, उपाख्यानमुखेनैव तूष्णींशंसस्वरूपप्रदर्शनम् .... .... ... | २५३ |
| तूष्णींशंसानुष्ठानविधानम् .... | २५४ |
| तूष्णींशंसनप्रशंसा .... .... | २५५ |
| प्रकारान्तरेण तूष्णींशंसप्रशंसा, वेदनप्रशंसा ... ... ... | २५६ |
| तूष्णींशंसस्य चक्षुःस्वरूपत्वोपपादनं प्रकारान्तरेण प्रशंसा च, होतुरनुकूलत्वेन प्रशंसा.... .... | २५७ |
| **दशमोऽध्यायः ।** | |
| आहावनिवित्सूक्तविधानम्.... | २५८ |
| अभिचारविधानम्, अनुकूलप्रयोगविधानम्, निवित्प्रशंसा .... | २५९ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| उक्तार्थदृढीकरणार्थं मन्त्रोदाहरणम्, निवित्प्रशंसापूर्वकं तदनुष्ठानप्रशंसा, वेदनप्रशंसा... .... | २६० |
| निविद्द्वादशपदविधानम् , | २६१-२६३ |
| निविदनन्तरभाविसूक्तविधानम्, सूक्तप्रथमर्क्प्रथमद्वितीयपादविहरणविधानम्, प्रथमर्क्तृतीयचतुर्थपादयोरविच्छेदविधानम्, वेदनप्रशंसा, उक्तमनूद्य प्रकारान्तरेण प्रशंसा, आग्नीध्रीयवासादिसिद्ध्यर्थमाख्यायिका.... .... ... ... | २६५ |
| सदस्यवस्थितेषु धिष्ण्येष्वाग्नीध्रादग्निविहरणविधानम्, शंसनीयशस्त्राणामाज्यनामकत्वस्याऽऽज्यशब्दनिर्वचनेन विशदनम्, अच्छावाकशस्त्रविधानम्, .... .... | २६६ |
| अच्छावाकस्य सदःप्रवेशे विशेषस्य विधानम्, अच्छावाकशस्त्रप्रशंसा... .... ... .... | २६७ |
| आज्यशस्त्रस्य बहिष्पवमानस्तोत्रोत्तरत्वविधिः प्रउगशस्त्रस्याऽऽज्यस्तोत्रोत्तरत्वविधिश्च, लौकिकफलप्रदर्शनेऽत्रैव रश्मिस्थानीयशस्त्रद्वयप्रशंसा, वेदनप्रशंसा... .... | २६८ |
| स्तोत्रशस्त्रयोर्वैयधिकरण्यचोद्योद्भावनम्, तत्परिहारः, अग्निपवमानयोरेकत्वे मन्त्रोदाहरणम्, परिहारमुपपाद्य निगमनम्, छन्दःप्रयुक्तवैयधिकरण्यरूपचोद्योद्भावनम्... | २६९ |
| तत्परिहारः, संपादनप्रकारप्रदर्शनम्, परिहारनिगमनम्, ऐन्द्राग्नग्रहयाज्याविधानम् ... .... | २७० |
| याज्यागताक्षरप्रशंसा, शस्त्रयाज्ययोर्देवताप्रयुक्तवैयधिकरण्यचोद्योद्भावनम्, तत्परिहारः .... .... | २७१ |
| आज्यशस्त्रस्य ग्रहद्वारा तूष्णींशंसद्वारा चैन्द्राग्नत्वस्य प्रदर्शनम्, पूर्वप्रदर्शितहोतृजपस्य विधानम्, | २७२ |
| जपस्योपांशुत्वविधानम्, जपस्याऽऽहावपूर्वभावित्वविधानम्, आहावोच्चारणकालेऽध्वर्योश्चतुष्पात्त्वविधानम्, आहावादूर्ध्वमध्वर्योश्चतुष्पात्त्वं परित्यज्य सम्यगुत्थानविधानम् .... .... .... | २७३ |
| सुमत्पद्वग्द इति पञ्चाक्षरपाठानन्तरं जपितव्यमन्त्रभागचतुष्टयमनूद्य व्याख्यानम् .... .... | २७४ |
| सोमबृहस्पत्योः सर्वकर्मप्रेरकत्वप्रसिद्धिप्रदर्शनम्, व्यतिरेकमुखेण दृढीकरणम्, वेदनप्रशंसा, पञ्चमभागमनूद्य व्याख्यानम् .... | २७५ |
| षष्ठभागमनूद्य व्याख्यानम्,आहावोत्तरकालिकतूष्णींशंसविधानम्, शंसनकाले ध्वनिराहित्यविधानम्, उपांशुत्वेन होतृजपसाम्यप्रसक्तौ वैषम्यविधानम् .... .... | २७६ |
| तूष्णींशंसस्येयत्ताविधानम्, तूष्णींशंसानन्तरं निविद्विधानम्, होतृजपगतोपांशुत्वात्तूष्णींशंसगतेषदुच्चध्वनित्वाच्च निविदो वैलक्षण्य- | |

विषयाः पृष्ठाङ्काः

विधानम् ... .... ... २७७

निवित्संख्याविधानम्, वेदनप्रशंसा, देवताद्वारा पुरोरुक्प्रशंसा, उक्तार्थाक्षेपपरिहारौ ... ... २७८

प्रवोदेवायेति सूक्तगतप्रथमर्ग्विधानम् ... .... ... २७९

द्वितीयर्ग्विधानम्, अध्ययनक्रमेण चतुर्थ्या अनुष्ठानाय तृतीयात्वविधानम् .... .... .... २८०

अध्ययनक्रमेण षष्ठ्या ऋचोऽनुष्ठानाय चतुर्थीत्वविधानम्, तृतीयर्चोऽनुष्ठानाय पञ्चमीत्वविधानम्, द्वितीयर्चः षष्ठीत्वविधानम् ... २८१

अध्ययनक्रमेणानुष्ठानक्रमेण च सप्तम्या शस्त्रसमाप्तिविधानम, शस्त्रान्ते याज्याविधानम् .... ... २८२

उक्तक्रमेणानुष्ठातृवेदित्रोः फलप्रदर्शनम्, वेदनमात्रस्य कथमीदृशं फलमित्याशङ्क्य सुवेदनत्वाद्युक्तं फलमितिसमाधानप्रदर्शनम्, उक्तवक्ष्यमाणयोः शङ्कापरिहाराय विभागप्रदर्शनम्, पूर्वोक्तक्रमेणैव देवताविषयशस्त्रप्रशंसनं विवक्षित्वा प्रथमं भूरग्निरित्यस्य प्रशंसा .... २८३

प्रवोदेवायेति सूक्तप्रथमर्क्प्रशंसा, अनुष्ठानक्रमेण द्वितीयर्क्प्रशंसा, तृतीयर्क्प्रशंसनम् .... .... २८४

चतुर्थ्यादिसप्तम्यन्तर्क्प्रदर्शनम् २८५

शस्त्रयाज्याप्रदर्शनम्, वेदनप्रशंसा .... .... ... २८६

---

विषयाः पृष्ठाङ्काः

एकादशोऽध्यायः ।

प्रउगशस्त्रनिरूपणार्थं प्रस्तावः २८७

प्रउगशस्त्रगतप्रथमादिपञ्चमान्ततृचविधानम् .... .... २८८

षष्ठसप्तमतृचविधानम्, वेदनप्रशंसा, प्रउगशस्त्रप्रशंसा, .... २८९

वेदनप्रशंसा, प्रकारान्तरेण प्रउगप्रशंसा, प्रथमतृचमनूद्य स्तुतिः २९०

द्वितीयादिपञ्चमान्तविधीननूद्य स्तुतिः .... ... ... २९१

षष्ठसप्तमविधी अनूद्य स्तुतिः, वेदित्रनुष्ठात्रोः प्रशंसा ... ... २९२

प्रकारान्तरेण प्रउगशस्त्रप्रशंसा, प्रश्नोत्तराभ्यां प्रउगशस्त्रसामर्थ्यप्रदर्शनम्, प्रथमतृचप्रयुक्तानिष्टप्रदर्शनम् .... .... .... .... २९३

द्वितीयादितृचनिमित्तानिष्टप्रदर्शनम्... .... .... .... २९४

सप्तमतृचप्रयुक्तानिष्टप्रदर्शनम्, उक्तशस्त्रस्येष्टफलसामर्थ्यप्रदर्शनम्, वेदनप्रशंसा, स्तोत्रशस्त्रयोर्देवतावैलक्षण्यरूपाक्षेपोत्थापनम्.... ... २९५

तदुत्तरम्, अग्नेः प्रथमतृचप्रतिपादितवायुदेवतास्वरूपत्वप्रदर्शनम्, द्वितीयतृचप्रतिपादितेन्द्रवायुदेवतासारूप्यप्रदर्शनम्, तृतीयतृचसारूप्यप्रदर्शनम् .... .... २९६

तत्र युक्त्यन्तरवचनम्, चतुर्थादितृचसारूप्यप्रदर्शनम् ... २९७

सप्तमतृचसारूप्यप्रदर्शनम्, अग्नेर्वाय्वादिदेवतानां च सारूप्यद्वा-

| विषयाः | पृष्ठाङ्काः |
|---|---|
| राऽनुशंसनमुपपाद्योपसंहारः, शस्त्रयाज्याविधानम् ... .... | २९८ |
| शस्त्रयाज्यान्ते पठनीयवषट्कारविधानम् , तदूर्ध्वं पठनीयानुवषट्कारमन्त्रविधानम् , अनुवषट्कारप्रशंसार्थं चोद्योत्तरे .... .... | २९९ |
| प्रकारान्तरेण प्रशंसार्थं चोद्यद्वयोद्भावनमुत्तरं च, वषट्कारमाश्रित्यैवाभिचारप्रयोगकथनम् , वषट्कारमन्त्रोत्तरभागप्रशंसा .... | ३०० |
| वेदितृप्रतिष्ठायाः प्रामाणिकपुरुषवचनोदाहरणेन दृढीकरणम् , वषट्कारमन्त्रपूर्वोत्तरभागप्रशंसनम् | ३०१ |
| फलविशेषार्थं वषट्कारावान्तरभेदकथनम् , तेषां मध्ये वज्रस्वरूपप्रदर्शनम् , तत्प्रयोगविधानम् | ३०२ |
| धामच्छत्स्वरूपप्रदर्शनं तत्प्रयोगविधानं च, रिक्तस्वरूपप्रदर्शनं तन्निन्दा च .... .... ... | ३०३ |
| प्रश्नोत्तराभ्यां वषट्कारेष्टानिष्टफलप्राप्तिसामर्थ्यप्रदर्शनम् , अनिष्टफलसाधनत्वप्रदर्शनमिष्टफलसाधनत्वप्रदर्शनं च .... | ३०४ |
| याज्यावषट्कारनैरन्तर्यविधानं वेदनप्रशंसा च, होतुर्वषट्कारकाले देवताध्यानविधानम्, होतुर्वषट्कारादूर्ध्वमनुमन्त्रणविधानम् .... | ३०५ |
| पक्षान्तरमभिप्रेत्यान्यमन्त्रेणानुमन्त्रणविधानम् , द्वितीयपक्षं निन्दित्वा मन्त्रान्तरप्रदर्शनम् ... | ३०६ |
| उक्तमन्त्रेणानुमन्त्रणविधानम् , मन्त्रपदार्थप्रदर्शनम् , उक्तमन्त्रेणोग्रत्वशान्तिकथनम् वेदनप्रशंसा, प्रियशरीरद्वयवाचकपदसहितोक्तमन्त्रेणैवानुमन्त्रणमिति सिद्धान्तकथनम् .... ... | ३०७ |
| वेदनप्रशंसा, प्रैषादिप्रशंसाकथनार्थमादौ प्रैषप्रशंसा, पुरोरुक्प्रशंसा | ३०८ |
| वेदिग्रहनिवित्प्रशंसा, प्रैषकर्तुः प्रह्वत्वगुणविधानार्थं प्रस्तावः, अस्त्वेवं लौकिकन्यायः किं प्रकृत इत्याशङ्क्य समाधानम् .... | ३०९ |
| पुरोनुवाक्याभ्यो दीर्घत्वेन प्रैषान्प्रशस्य तदुच्चारणकाले प्रह्वत्वविधानम् , निविदां प्रातःसवने माध्यंदिनसवने च स्थानविशेषविधानम् .... ... .... | ३१० |
| तृतीयसवनस्थानविशेषविधानम्, वेदनप्रशंसा, निविदां सवनत्रयविहितस्थानत्रयप्रशंसा, वेदनप्रशंसा च .... ... | ३११ |
| सूर्यसादृश्येन निवित्प्रशंसा, द्वादशपदरूपनिविदामेकैकस्मिन्पादेऽवसानविधानम्, निविच्छंसकहोत्रेऽश्वदानविधानम्, द्वादशसु निवित्पदेषु पदातिक्रमणनिषेधः, विपक्षबाधकपूर्वकं पूर्वपक्षानिगमनम् | ३१२ |
| पदविपर्यासनिषेधः, निवित्पदसंश्लेषणनिषेधः, मध्यमपदद्वयस्य संश्लेषविधानम्, निवित्पदप्रक्षेपाश्र- | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ...सूक्ते नियमविधानम्.... .... | ३१३ |
| तृतीयसवने विशेषविधानम्, विपक्षबाधपुरःसरं स्वपक्षोपसंहारः, निविद्धानीयसूक्तेन निविदतिक्रमनिषेधः, प्रमादान्निवित्प्रक्षेपविस्मृतौ तत्सूक्ते प्राप्तस्य निवित्प्रक्षेपस्य निषेधः .... ... .... | ३१४ |
| तर्हि का निविद्धातिरित्याशङ्क्य समाधानम्, तत्र विशेषविधानम्, द्वितीयपादतात्पर्यप्रदर्शनम् .... | ३१५ |
| तृतीयपादमनूद्य व्याख्यानम्, तत्सूक्तगतद्वितीयर्गनुवादः, तन्तुशब्दतात्पर्यप्रदर्शनम्, तृतीयर्क्पूर्वार्धानुवादस्तात्पर्यप्रदर्शनं च, सूक्तस्य प्रथमपाठे प्रयोजनकथनम् | ३१६ |

द्वादशोऽध्यायः ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रातःसवने होतुराहाववचनस्याध्वर्योः प्रतिगरस्य च विधानम् | ३१७ |
| शस्त्रोत्तरकालिकयोर्होत्रध्वर्युपठनीयमन्त्रयोर्विधानम्, माध्यंदिनसवने मन्त्रचतुष्टयविधानम्, तृतीयसवने मन्त्रचतुष्टयविधानम् .... | ३१८ |
| उक्तार्थस्य मन्त्रसंवादेन दृढीकरणम्, तन्मन्त्रतात्पर्ययोः प्रदर्शनम्, उक्तार्थवेदनप्रशंसा च .... | ३१९ |
| अनुष्टुभो मुख्यत्वेन प्रशंसां कर्तुं प्रजापत्याख्यायिका, परिशिष्टानुष्टुब्वृत्तान्तकथनम् .... | ३२० |
| एतद्वेदनप्रशंसा, प्रजापतिन्यायेन यजमानस्यापि सवनीययागादावनुष्टुप्प्रयोगप्रदर्शनम्, उक्तवाक्यार्थस्य वाक्यान्तरेण स्पष्टीकरणम् ... .... ... | ३२१ |
| प्रकारान्तरेणानुष्टुभो महिमानं दर्शयितुमग्न्याख्यायिका, माध्यंदिनसवनेऽनुष्टुभो मृत्युपरिहारहेतुत्वेन प्रशंसा .... ... .... | ३२२ |
| तृतीयसवने मृत्युपरिहारेणानुष्टुप्प्रशंसा, यज्ञायज्ञीयाख्यसाम्नो वैश्वानरीयसूक्तस्य च प्रशंसा, वेदनप्रशंसा .... .... .... | ३२३ |
| मरुत्वतीयशस्त्रप्रकथनम् | ३२४–३४१ |
| निष्केवल्यशस्त्रविधानम् | ३४२–३५३ |

त्रयोदशोऽध्यायः ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| तृतीयसवनवचनार्थं सोमाहरणप्रतिपादकसौपर्णाख्यानम् .... | ३५४ |
| सोमाहरणार्थमुत्पतत्सु च्छन्दःसु मध्ये जगतीवृत्तान्तः .... ... | ३५५ |
| त्रिष्टुब्वृत्तान्तः, गायत्रीवृत्तान्तः | ३५६ |
| गन्धर्वेण सह युद्धे गायत्रीवृत्तान्तप्रदर्शनम्... ... | ३५७–३५८ |
| तृतीयसवनार्थं सवनोत्पत्तिप्रदर्शनम्, तस्मिन्सवन ऋजीषस्वरूपे निःसारे सोम आशिरादिकविधानम् ... .... .... ... | ३५९ |
| वेदनप्रशंसा, पूर्वत्र सर्वाणि च्छन्दांसि चतुरक्षराणीत्युक्तं तेष्वपि त्रिष्टुभ एकमक्षरं गतं जगत्याश्च त्रीण्यक्षराणि गतानि, तथा सति | |

विषयाः पृष्ठाङ्काः

सर्वश्रुत्यन्तरविरोधः, तेषु च श्रुत्यन्तरेष्वष्टाक्षरा गायत्री, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगतीति सर्वत्र श्रूयतेऽनुष्ठानं च तथैव क्रियते, तत्कथं विरोधपरिहार इत्याशङ्क्याऽऽख्यायिकया परिहारप्रदर्शनम् .... .... .... ३६०–३६२

तृतीयसवनगतवैश्वदेवशस्त्रप्रदर्शनम् .... ... ....३६३–३७४

उपाख्यानकथनपूर्वकमाग्निमारुतशस्त्रप्रकथनम् .... ३७५–३९४

## चतुर्दशोऽध्याय।

पूर्वोक्ताग्निष्टोमस्य सर्वयज्ञक्रतुप्रकृतित्वेन सवनार्थमुपाख्यानम्, अग्नेरसुरैः सह युद्धप्रकारप्रदर्शनम् ३९५

वेदनप्रशंसा, प्रकारान्तरेणाग्निष्टोमप्रशंसा, प्रकारान्तरेण गायत्रीसाम्यं संपाद्य प्रशंसा.... .... ३९६

संवत्सरसाम्येन स्तुतिः, समुद्रसाम्येन प्रशंसा, अग्निष्टोमादपि प्राचीनानां यज्ञानामग्निष्टोमप्राप्त्यादिप्रदर्शनम् ... ...३९७–३९९

क्रत्वन्तराणामग्निष्टोमप्राप्तिप्रदर्शनम्, अतिरात्राप्तोर्यामयोरग्निष्टोमप्रवेशप्रदर्शनम् .... .... ४००

सर्वयज्ञक्रतुत्वान्तर्भावोपसंहारः, प्रकारान्तरेणाग्निष्टोमप्रशंसा ... ४०२

उक्तार्थवेदनप्रशंसा... .... ४०३

देवासुराख्यायिकाकथनपूर्वकं त्रिवृदादिस्तोमचतुष्टयद्वारेणाग्निष्टोमस्तुतिः .... .... ... ४०४

स्तोमचतुष्टयोपसंहारः, स्तोमचतुष्टयसमुच्चयविधानम्.... .... ४०६

अग्निष्टोमादिशब्दनिर्वचनेनाग्निष्टोमप्रशंसा, उक्तार्थस्य मन्त्रोदाहरणेन दृढीकरणम् ... ४०७,४०८

संक्षेपेण गाथातात्पर्यप्रदर्शनम्, अत्राऽऽक्षेपपरिहारौ ... .... ४०९

आदित्यसाम्येनाग्निष्टोमप्रशंसा, अग्निष्टोमानुष्ठाने त्वरानिषेधः, विपक्षे बाधकप्रदर्शनम् ... .... ४१०

स्वपक्षनिगमनम्, त्रिषु सवनेषु शस्त्रस्योत्तरोत्तरं ध्वन्याधिक्यविधानम् .... .... .... ४११

तृतीयसवने त्वरामन्तरेण शनैः शंसेदिति पूर्वत्रोक्तं तथा सति कालस्याल्पत्वेन समापनात्प्रागेव सूर्योऽस्तमियादित्याशङ्क्य वस्तुतोऽस्तमयाभावान्नास्ति दोष इत्युत्तरकथनम्, जनानां सूर्यास्तमयव्यवहारोपपत्तिकथनम् .... .... .... ४१२

अनेनैव न्यायेन सूर्यस्य स्वरूपोत्पत्तिलक्षणोदयाभावस्य प्रदर्शनम्, परामार्थतोऽस्तमयाभावनिगमनम्, वेदनप्रशंसा .... .... ४१३

## पञ्चदशोऽध्यायः।

आख्यायिकाकथनपूर्वकं दीक्षणीयेष्टिसंस्थाप्रदर्शनम् ... ... ४१४

प्रायणीयसमाप्तिप्रदर्शनम्, आ-

| विषयाः | पृष्ठाङ्काः |
|---|---|
| तिथ्येष्टिसमाप्तिप्रदर्शनम्, उपसत्स्वनुष्ठेयस्य प्रदर्शनम्.... .... | ४१५ |
| अग्नीषोमीयपश्वनुष्ठेयप्रदर्शनम्, उक्तेष्टिषु होतुरनुवचनस्य मन्द्रस्वरविधानम्, अग्नीषोमीयपशौ होतुरनुवचने ध्वनेरिडानुसारित्वविधानम् | ४१६ |
| देवानां यज्ञप्राप्त्युपायमभिधायान्नाद्यप्राप्त्युपायप्रदर्शनम्, यज्ञे वर्ज्यब्राह्मणविशेषप्रदर्शनार्थं प्रस्तावः | ४१७ |
| जग्धस्थानीयनिषेधः, गीर्णमुदाहृत्य तन्निषेधः, वान्तस्थानीयनिषेधः .... ... .... | ४१८ |
| वर्ज्यत्वेनोक्तत्रिविधोपसंहार,ः प्रमादकृतप्रायश्चित्तम्, वामदेव्यसामप्रशंसा .... ... .... | ४१९ |
| वामदेव्यसाम्नि प्रायश्चित्तप्रकारप्रदर्शनम्, आर्त्विज्यवैकल्यपरिहारप्रदर्शनम्, नित्यप्रयोगेऽपि नैमित्तिकाक्षरत्रयप्रक्षेपविधानम् .... | ४२० |
| देवार्थं हव्यवहने छन्दःप्रयुक्तविशेषाभिधानम्, देविकाहविष्पञ्चकविधानम्, छन्दःश्रमपरिहारप्रकारकथनम्, उक्तार्थवेदनपूर्वकानुष्ठानस्य प्रशंसा, विद्वत्प्रसिद्ध्या छन्दःप्रशंसा, वेदनप्रशंसा ... | ४२१,४२२ |
| उक्तविषये पूर्वोत्तरपक्षौ, लौकिकदृष्टान्तेन स्त्रीदेवतासु मिथुनसिद्धिप्रकारोपपादनम् .... .... | ४२३ |
| वक्ष्यमाणहविःसांकर्यनिवारणार्थं विविच्योक्तार्थस्य निगमनम्, देवीहविष्पञ्चकविधानम्, एतद्धविषां प्रशंसार्थं पूर्वोक्तार्थवादपाठः.... | ४२४ |
| उभयविधहविषां सामर्थ्यस्य तुल्यताभिप्रायेण विकल्पप्रदर्शनम्, नैमित्तिकसमुच्चयविधानम्, धनकामस्य समुच्चयनिषेधः .... | ४२५ |
| विपक्षे बाधकप्रदर्शनम्, प्रजाकामस्य विहितसमुच्चयस्यार्थवादेन प्रशंसा .... ... .... | ४२६ |
| आख्यायिकाकथनपूर्वकमुक्थ्यसंस्थारूपज्योतिष्टोमाभिधानम् | ४२७-४३१ |

## षोडशोऽध्यायः ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| षोळशिसंस्थाप्रकथनम् | ४३२,४४४ |
| इतिहासकथनपूर्वकमिन्द्रच्छन्दःप्राधान्यादेर्होत्रकशस्त्रादेश्च वर्णनम् .... ... .... | ४४५-४५१ |

## सप्तदशोऽध्यायः ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| आख्यायिकामुखेन रात्रिपर्यायेभ्य ऊर्ध्वमतिरात्रक्रतूपयुक्ताश्विनशस्त्रादिवर्णनम् ... | ४५२-४५६ |
| देवानामाजिधावनकथाशेषानुवर्तनेनाऽऽश्विनशस्त्रप्रशंसादिप्रकथनम् ... ... ... | ४५७-४६४ |
| आश्विनशस्त्रसमाप्त्युपयुक्तार्त्विध्यादिप्रकथनम् .... | ४६५-४६८ |
| गवामयननामकसंवत्सरसत्रप्रथमादिदिवसगतानुष्ठेयसोमप्रयोगविध्यादिप्रकथनम् ... .... | ४६९-४७६ |
| संवत्सरसत्राद्यन्तदिवसविध्यादिप्रकथ- | |

विषयाः पृष्ठाङ्काः

नम् ... .... .... ४७७

अष्टादशोऽध्यायः ।

मासक्लृप्तिविधानायाभिप्लवषडहपूर्वभागरूपत्र्यहविधानादिप्रकथनम् .... .... ४७८–४८२

संवत्सरसत्रविधानादिप्रकथनं शस्त्रादिकथनसहितम् .... ४८३–५०५

एकोनविंशोऽध्यायः ।

प्रजापत्याख्यायिकाकथनपूर्वकं संवत्सरसत्रोपयुक्तद्वादशाहादिकथनम् .... .... ५०६–५२५

विंशोऽध्यायः

द्वादशाहगतनवरात्रविधानादिकथनम् .... .... ५२६–५४२

समाप्तेयमैतरेयब्राह्मणाद्यपञ्चिकाचतुष्टयभाष्यान्तर्गतविषयानुक्रमणिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

# ऐतरेयब्राह्मणम् ।




श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

तत्र प्रथमोऽध्यायः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥

ननु कोऽयं वेदो नाम के वा तस्य विषयप्रयोजनसंबन्धाधिकारिणः कथं वा तस्य प्रामाण्यम् । न खल्वेतस्मिन्सर्वस्मिन्नसति वेदो व्याख्यानयोग्यो भवति । अत्रोच्यते । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते । अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्वमौषधादेरनिष्टपरिहारहेतुत्वं च प्रत्यक्षतः सिद्धम् । स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यम् । एवं तर्हि भाविजन्मगतमप्यनुमानगम्यमिति चेन्न । तद्विशेषस्यानवगमात् । न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमा सहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति । तस्मादलौकिकोपायबोधको वेद इति लक्षणस्य नातिव्याप्तिः । अत एवोक्तम्—

“ प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ” इति ॥

स एवोपायो वेदस्य विषयस्तद्बोध एव प्रयोजनं तद्बोधार्थी चाधिकारी । तेन सहोपकार्योपकारकभावः संबन्धः । नन्वेवं सति स्त्रीशूद्रसहिताः सर्वेऽपि

वेदाधिकारिणः स्युः । इष्टं मे स्यादनिष्टं मा भूदित्याशिषः सार्वजनीनत्वात् । मैवम् । स्त्रीशूद्रयोः सत्यप्युपायबोधार्थित्वे हेत्वन्तरेण वेदाधिकारस्य प्रतिबद्धत्वात् । उपनीतस्यैवाध्ययनाधिकारं ब्रुवच्छास्त्रमनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययनमनिष्टप्राप्तिहेतुरिति बोधयति । कथं तर्हि तयोस्तदुपायावगमः, पुराणादिभिरिति ब्रूमः । अत एवोक्तम्—

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं मुनिना कृपया कृतम्" इति ॥

तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य संबन्धः । तत्प्रामाण्यं तु बोधकत्वात्स्वत एव सिद्धम् । पौरुषेयवाक्यं तु बोधकमपि सद्भ्रान्तिमूलत्वसंभावनया तत्परिहाराय मूलप्रमाणमपेक्ष्यैव प्रमाणम् । न तु वेदो मूलप्रमाणमपेक्षते । तस्य नित्यत्वेन कर्तृदोषशङ्काया अनुदयात् । एतदेव जैमिनिना सूत्रितम्—'तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति । ननु वेदोऽपि कालिदासादिवाक्यवत्पौरुषेय एव । ब्रह्मकार्यत्वश्रवणात्—"ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" इति हि श्रुतेः । अत एव भगवान्बादरायणः—'शास्त्रयोनित्वात्' इति सूत्रेण ब्रह्मणो वेदकारणत्वमवोचत् । मैवम् । श्रुतिस्मृतिभ्यां नित्यत्वावगमात् । 'वाचा विरूपनित्यया' इति श्रुतिः । "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा" इति स्मृतिः । बादरायणोऽपि देवताधिकरणे सूत्रयामास—'अत एव च नित्यत्वम्' इति । तर्हि परस्परविरोध इति चेन्न । नित्यत्वस्य व्यावहारिकत्वात् । सृष्टेरूर्ध्वं संहारात्पूर्वो व्यवहारकालस्तस्मिन्नुत्पत्तिविनाशादर्शनात् । कलाकाष्ठादयो यथा नित्या एवं वेदोऽपि व्यवहारे कालिदासवाक्यवत्पुरुषविरचितत्वाभावान्नित्यः । आदिसृष्टौ तु कलाकाष्ठादिवद्वेदोत्पत्तिराम्नायते । अतो विषयभेदान्न परस्परविरोधः । ब्रह्मणो निर्दोषत्वेन वेदस्य कर्तृदोषासंभवात्स्वतःसिद्धं प्रामाण्यं तदवस्थम् । तस्माल्लक्षणप्रमाणसद्भावाद्विषयप्रयोजनसंबन्धाधिकारिसद्भावात्प्रामाण्यस्य सुस्थितत्वाद्वेदो व्याख्यातव्य एव । ननु वेदार्थावबोधे विध्यभावाद्बोधसाधनं व्याख्यानं व्यर्थमिति चेन्न । अध्ययनविधेर्बोधपर्यवसायित्वात् । एतच्च भट्टगुरुमतानुसारिभिर्बहुधा प्रपञ्चितम् ।

आम्नायते च—" यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥
स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।

योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥
ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च " इति ॥

एवं तर्हि ज्ञानस्य पृथग्विधानादध्ययनं पाठमात्रमिति चेदस्तु नाम । वर्णयन्त्येवमेव शाबरदर्शनानुसारिणः । कर्तुर्विधिव्यतिरेकेणानुष्ठानान्यथानुपपत्त्या वेदार्थज्ञानस्य प्रापितत्वान्नैतद्विधेयमिति चेत्तर्हि तद्विधिबलाद्वेदनमात्रेण स्वतन्त्रं किंचिदपूर्वमस्तु । श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक्फलम्–' तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद ' इति । अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थमिति चेन्न । तरणीयाया ब्रह्महत्याया मानसवाचिककायिकत्वादिभेदेन तारतम्योपपत्तेः । मनसा संकल्पिता वाचाऽभ्यनुज्ञाता परहस्तेन कारिता स्वयं कृता पुनः कृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्या अनेकविधाः । अतस्तत्तरणमप्यनेकविधम् । यथा स्वर्गो बहुविधस्तद्वत् । अग्निहोत्रं जुहुयात्स्वर्गकामः । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्याद्युच्चावचकर्मणामेकविधफलासंभवात्स्वर्गो बहुविधोऽभ्युपगन्तव्यः । तथा ब्रह्महत्यादिपापनिवृत्तेरपि बहुविधत्वाद्वेदनेनापि काचिद्ब्रह्महत्या निवर्तत इति योग्यतानुसारेण कल्प्यताम् । किंच तत्तद्विधिसमीपे य एवं वेदेति वचनानि वेदनफलं ब्रुवते तान्यर्थवाद इति चेत् । अस्तु नाम सहामह एवैतमपराधं तेषां वचनानाम् । विधेयार्थप्रशंसापरत्वात् । तर्हि यत्परो हि शब्दः स शब्दार्थ इति न्यायेन स्वार्थे प्रामाण्यं नास्तीति चेत् । महातात्पर्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयत्वानिवारणात् । ग्रावाणः प्लवन्त इत्याद्यर्थवादस्यापि स्वार्थे प्रामाण्यं प्रसज्येतेति चेन्न । प्रमाणान्तरबाधितत्वात् । द्विःसंवत्सरस्य सस्यं पच्यत इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वान्न स्वार्थे प्रामाण्यम् । वेदनफलवचनानि तु नानुवादकानि नापि बाध्यानि । तस्मादर्थवादत्वेऽप्यस्त्वेषां स्वार्थे प्रामाण्यमन्यथा मन्त्रार्थवादादिभ्यो देवादीनां विग्रहादिमत्त्वं न सिध्येत् ।

अत एवोक्तम्—

" विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः " इति ॥

किं बहुना विद्यत एवावश्यं वेदनमात्रादपूर्वमतो वेदनाय वेदो व्याख्यायते । तस्य च वेदस्य भागद्वयं कल्पसूत्रकारैरुदाहृतम्–' मन्त्रब्राह्मणयोर्वेदनामधेयम् ' इति । तत्र मन्त्रविषया विचाराः संहिताव्याख्याने द्रष्टव्याः । ब्राह्मणलक्षणं तु द्वितीयाध्यायस्य प्रथमपादे विचारितम्—

नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा ।
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ।
अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ” इति ॥

चातुर्मास्येष्विदमाम्नायते—‘ एतद्ब्राह्मणान्येव पञ्च हवींषि ’ इति । तत्र ब्राह्मणस्य लक्षणं नास्ति । कुतः । वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च वाच्यलक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वादिति चेन्न । भागद्वयाङ्गीकारेण मन्त्रव्यतिरिक्तो भागो ब्राह्मणमिति लक्षणस्य निर्दोषत्वात् । ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीरिति । मैवम् । विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदानामेवेतिहासादीनां पृथगभिधानात् । देवासुराः संयत्ता आसन्नित्यादय इतिहासाः । इदं वा अग्रे नैव किंचनाऽऽसीन्न द्यौरासीदित्यादिकं जगतः प्रागवस्थानमुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम् । कल्पस्तु, आरुणकेतुकचयनप्रकरणे समाम्नायते—‘इति मन्त्राः कल्पोऽत ऊर्ध्वं यदि बलिं हरेत् ’ इति । अग्निचयनप्रकरणे यमगाथाभिः परिगायतीति विहिता मन्त्रविशेषा गाथाः । मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः । तस्मान्मन्त्रब्राह्मणव्यतिरिक्तवेदभागाभावान्मन्त्रव्यतिरिक्तं ब्राह्मणमित्येतल्लक्षणं सुस्थितम् । तस्य लक्षणस्याग्निर्वै देवानामवम इत्यादिग्रन्थे विद्यमानत्वादिदं ब्राह्मणम् । तच्चेश्वरानुग्रहादितरायाः पुत्रेण लब्धत्वादैतरेयकमित्युच्यते । महर्षीणां तत्तद्वेदभागलाभः स्मर्यते—

“ युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा” इति ॥

प्रकृतस्य तु ब्राह्मणस्यैतरेयकत्वे संप्रदायविद एतामाख्यायिकामाचक्षते । कस्यचित्खलु महर्षेर्बह्व्यः पत्न्यो विद्यन्ते । तासां मध्ये कस्याश्चिदितरेति नामधेयम् । तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः । एतच्चाऽऽरण्यकाण्डे समाम्नायते—‘ एतद्ध स्म वै तद्विद्वान्महिदास ऐतरेयः ’ इति । तदीयस्य तु पितुर्भार्यान्तरपुत्रेष्वेव स्नेहातिशयो न तु महिदासे । ततः कस्यांचिद्यज्ञसभायां तं महिदासमवज्ञायान्यान्पुत्रान्स्वोत्सङ्गे स्थापयामास । तदानीं खिन्नवदनं महिदासमवगत्येतराख्या तन्माता स्वकीयकुलदेवतां भूमिमनुसस्मार । सा च

१ क. °द्व्रानाद्द म° ।

भूमिर्देवता दिव्यमूर्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैनमुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्यमवगमय्यैत-द्ब्राह्मणप्रतिभासनरूपं वरं ददौ । तदनुग्रहात्तस्य महिदासस्य मनसाऽग्निर्वै देवानामवम इत्यादिकं स्तृणुते स्तृणुत इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत् । तत ऊर्ध्वमथ महाव्रतमित्यादिकमाचार्या आचार्या इत्यन्तमारण्य-कव्रतरूपं च ब्राह्मणमाविरभूदिति । तस्यैतरेयस्य प्रादुर्भूते चत्वारिंशदध्यायो-पेतब्राह्मणे चतुःसंस्थो ज्योतिष्टोमः प्रथमं विधीयते । ततो गवामयनं तत आदित्यानामयनं ततोऽङ्गिरसामयनं ततो द्वादशाहस्ततोऽन्यत्सर्वं प्रासङ्गिक-मिति द्रष्टव्यम् । गोष्टोमायुष्टोमादिषु सोमयागेषु ज्योतिष्टोमस्य प्राथम्यमुक्तम्— 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति श्रुतेः । तस्य ज्योतिष्टोमस्य सप्तसंस्थोपेतस्याग्निष्टोम उक्थ्यः षोडश्यतिरात्रश्चेत्येताश्चतस्रः संस्था अत्रानुक्रमेण वक्ष्यन्ते । तस्मिन्नपि चतुष्टयेऽग्निष्टोमः प्रकृतिः कृत्स्नस्या-नुष्ठेयस्य । तस्मिन्नग्निष्टोमे प्रत्यक्षश्रुत्यैवोपदिष्टत्वात् । प्रकर्षेण क्रियते साकल्ये-नानुष्ठेयमुपदिश्यते यस्यां सा प्रकृतिरिति हि तच्छब्दव्युत्पत्तिः । उक्थ्यादयस्तु विकृतयः । विशेषस्यैव तत्र प्रत्यक्षोपदेशेन संपादितत्वात् । अवशिष्टं तु सर्वमनुष्ठेयं प्रकृतिवद्विकृतिः कर्तव्येति न्यायेनैव संपाद्यते । अत एवोपजीव्य-त्वादग्निष्टोम एवाऽऽदौ वक्तव्यः । यद्यपि तस्याग्निष्टोमस्योपक्रमेऽवश्यमृत्विग्वरणं वक्तव्यं सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीत इत्यापस्तम्बे-नाभिधानात्तथाऽप्यृग्वेदस्य होतृकर्तव्यप्रतिपादकत्वादृत्विग्वरणस्य तु हौत्र-त्वाभावात्तदुपेक्ष्य दीक्षणीयेष्टिरादौ विधीयते । ऋग्वेदस्य हौत्रत्वं समाख्याब-लात्तृतीयाध्यायस्य तृतीयपादे विचारितम्—

"वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः ।
अनियत्या नियत्या वा नियतिर्नानिरूपणात् ॥
हौत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः ।
निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम्" ॥ [ इति ]

याज्यापुरोनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः । दोहननिर्वापादयो यजुर्वेदे । आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे । तत्रास्यैवैते धर्मा इति नियाम-कस्य दुर्निरूपत्वाद्येन केनाप्यृत्विजा यः कोऽपि धर्म इच्छया संगच्छत इति चेन्मैवम् । हौत्रमाध्वर्यवमौद्गात्रमिति समाख्यानेन नियतिर्बोध्यते । न च समा-ख्यानस्य बाधकं किंचित्पश्यामः । तस्मादबोधकत्वबाधितत्वयोरप्रामाण्यकार-णयोरभावाच्छ्रुतिलिङ्गादिपश्चकवत्प्रमाणेन समाख्यानेन धर्मा व्यवस्थाप्यन्ते ।

सवने ते देवाः प्राजिज्ञासन्त तत्पशुष्वपश्यंस्त-
यदाशिरमवनयन्त्याज्येन पशुना चरन्ति तेन
तत्समावद्वीर्यमभवत्पूर्वाभ्यां सवनाभ्याम्, इति ।

सा गायत्री मुखेन तृतीयसवनरूपं सोमं गृहीत्वा द्युलोकादधः पतन्ती तस्य सोमस्य रसमधयत्सारं पीतवती । तत्तृतीयसवनं धीतरसं पीतसारं भूत्वा पूर्वोक्तप्रातःसवनमाध्यंदिनसवने द्वे अनुगन्तुं नाशक्नोत् । ते देवास्तत्प्रतीकारं विचार्य तत्साधनं पशुष्वपश्यन् । पशुषु क्षीरं यदस्ति यच्चाऽऽज्यमस्ति यदपि हृदयाद्यङ्गमस्ति तत्सर्वं सारम् । तस्माद्धतपीतरसे सोमसंबन्धिनि ऋजीष आशिरं क्षीरमवनयन्ति सिञ्चन्ति याज्ञिकास्तथाऽऽज्यपशुभ्यां चरन्त्यनुतिष्ठन्ति तदानीं तेनानुष्ठानेन तत्तृतीयसवनं पूर्वसवनाभ्यां तुल्यसामर्थ्यमभूत् । अयमर्थः सर्वोऽपि शाखान्तरे संगृह्याऽऽम्नातः—ब्रह्मवादिनो वदन्ति-तस्मात्सत्याद्गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं प्रतीयायेति यदेवादः सोममाहरत्तस्माद्यज्ञमुखं पर्यैत्तस्मात्तेजस्विनी तमापद्भ्यां द्वे सवने समगृभ्णान्मुखेनैकं यन्मुखेन समगृभ्णादत्तदधयत्तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च तस्मात्तृतीयसवनं ऋजीषमभिषुत्य धीतमिव हि मध्यत आशिरमवनयाति सशुक्रत्वायेति ।

वेदनं प्रशंसति ।

सर्वैः सवनैः समावद्वीर्यैः समावज्जा-
मीभी राध्नोति य एवं वेद ॥ २७ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये तृतीयः खण्डः ॥ ३ ॥ (२७) [९८] ।

---

ननु पूर्वत्र सर्वाणि छन्दांसि चतुरक्षराणीत्युक्तं तेष्वपि त्रिष्टुभ एकमक्षरं गतं जगत्याश्च त्रीण्यक्षराणि गतानि । तथा सति सर्वश्रुत्यन्तरविरोधः । तेषु च श्रुत्यन्तरेष्वष्टाक्षरा गायत्री । एकादशाक्षरा त्रिष्टुप् । द्वादशाक्षरा जगतीति सर्वत्र श्रूयतेऽनुष्ठानं च तथैव क्रियते तत्कथं विरोधपरिहार इत्याख्यायिकया परिहारं दर्शयितुमारभते—

ते वा इमे इतरे छन्दसी गायत्रीमभ्यवदेतां वित्तं

नावक्षराण्यनुपर्यागुरिति नेत्यब्रवीद्गायत्री यथा-
वित्तमेव न इति ते देवेषु प्रश्नमैतां ते देवा अब्रु-
वन्यथावित्तमेव व इति तस्माद्धाप्येतर्हि वित्त्यां
व्याहुर्यथावित्तमेव न इति ततो वा अष्टाक्षरा
गायत्र्यभवत्र्यक्षरा त्रिष्टुबेकाक्षरा जगती, इति ।

ये त्रिष्टुब्जगत्यौ पुरा स्वकीयान्यक्षराणि परित्यक्तवत्यौ ते एवेमे इतरे गायत्रीव्यतिरिक्ते छन्दसी गायत्रीमभिलक्ष्य समागत्यैवमुक्तवत्यौ । हे गायत्रि यत्त्वया वित्तं लब्धमधिकमक्षरचतुष्टयं तदेतन्नौ त्रिष्टुब्जगत्योरावयोः । तस्मात्तानि चत्वार्यक्षराण्यनुपर्यागुरावां त्रिष्टुब्जगत्यावनुलक्ष्य पर्यावृत्य गच्छन्त्विति । गायत्री तयोर्वचनं नेति निराकृत्य तत्रैतामुपपत्तिमब्रवीत् । नोऽस्माकं यथावित्तमेव लब्धमनतिक्रम्यैव स्वामित्वं युक्तम् । यद्वस्तु येन लब्धं तत्तस्यैवेति लौकिकन्यायस्तं न्यायं निर्णेतुं ते त्रिष्टुब्जगत्यौ देवेषु प्रश्नमैतां प्राप्नुताम् । हे देवाः कथं न्याय इति तयोः प्रश्नः । ते च देवा उत्तरमेवमब्रुवन् । वो युष्माकं तिसृणां यथावित्तमेवाक्षरस्वीकारो युक्त इति । यस्माद्देवैरेवमुक्तं तस्माद्ध तत एव कारणादिदानीमपि वित्त्यां कस्यांचित्पुरुषस्य द्रव्यलब्धौ सत्या व्याहुर्विप्रतिपन्नं प्रति न्यायाभिज्ञा एवमाहुः । नोऽस्माकं सर्वेषामपि लब्धमनतिक्रम्यैव वस्तुस्वीकारो युक्त इति । युद्धादौ जये सति परसेनायां प्रविश्य येन यल्लभ्यते तेनैव तद्गृह्यत इति वक्तृणामभिप्रायः । देवैर्न्याये निर्णीते सति तदूर्ध्वं गायत्री स्वकीयैः स्वभावसिद्धैश्चतुरक्षरैर्युद्धे लब्धैश्चतुरक्षरैरपि स्वयमष्टाक्षराऽभूत् । त्रिष्टुभः पूर्वं वर्तमानेषु चतुर्ष्वेकाक्षरस्य गतत्वात्त्र्यक्षरैव सा । तथा जगत्याश्चतुरक्षरेष्वक्षरत्रयस्य गतत्वादेकाक्षरैव साऽभवत् ।

इदानीं त्रिष्टुभोऽक्षरत्रयादधिकानामक्षराणां प्राप्तिप्रकारं दर्शयति--

साऽष्टाक्षरा गायत्री प्रातःसवनमुदयच्छन्नाश-
क्नोत्त्रिष्टुप्त्र्यक्षरा माध्यंदिनं सवनमुद्यन्तुं तां
गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति सा तथे-
त्यब्रवीत्त्रिष्टुप्तां वै मैतैरष्टाभिरक्षरैरुपसंधेहीति
तथेति तामुपसमदधादेतद्वै तद्गायत्र्यै माध्यंदिने

यन्मरुत्वतीयस्योत्तरे प्रतिपदो यश्चानुचरः सैका-
दशाक्षरा भूत्वा माध्यंदिनं सवनमुदयच्छत्, इति ।

येयमष्टाक्षरा गायत्री सेयं प्रातःसवनमुदयच्छदुद्यमनं निर्वाहं तस्य प्रातः-सवनस्याकरोत् । या तु त्रिष्टुप्त्र्यक्षराऽक्षरत्रयमात्रेण युक्ता सती माध्यंदिन-सवनमुद्यन्तुं निर्वोढुं नाशक्नोत्तामशक्तां त्रिष्टुभं दृष्ट्वा गायत्र्येवमब्रवीत् । आयानि त्वत्सहायार्थमहमागच्छानि मे ममाप्यत्रास्मिन्माध्यंदिने सवने भा-गोऽस्त्विवति । तद्वचनमङ्गीकृत्य सा त्रिष्टुबेवमब्रवीद्गायत्रीं तां वै मा तादृशीं त्र्यक्षरामेव मां स्वकीयैरेतैरष्टाभिरक्षरैरुपसंधेहि सामीप्येन संधानं कुरु। प्रविशे-त्यर्थः। तद्वचनमङ्गीकृत्य सा गायत्री तां त्रिष्टुभमुपसमदधात्स्वकीयैरष्टाभिरक्षरैः प्राविशत् । कोऽसौ गायत्र्या लब्धो भाग इति स उच्यते । मरुत्वतीयस्य शस्त्रस्योत्तरे प्रतिपदौ, आ त्वा रथमित्यस्मिन्प्रारम्भरूपे तृचे प्रथमाया उत्तरे ये द्वे ऋचौ प्रतिपदौ प्रारम्भरूपे विद्येते यश्चेदं वसो सुतमित्यनुचररूपस्तृच-स्तदेवैतदृक्पञ्चकं माध्यंदिनसवने गायत्र्यै त्रिष्टुभा दत्तम्। ताश्च पञ्चर्चो गायत्री-छन्दकास्ततो गायत्रीप्रवेशात्सा त्रिष्टुबेकादशाक्षरा भूत्वा माध्यंदिनसवनप्र-योगमुदयच्छन्निरवहत् ।

अथ जगत्याः स्वकीयादेकस्मादक्षरादधिकानामक्षराणां प्राप्तिप्रकारं दर्शयति—

नाशक्नोज्जगत्येकाक्षरा तृतीयसवनमुद्यन्तुं
तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विवति सा
तथेत्यब्रवीज्जगती तां वै मैतैरेकादश-
भिरक्षरैरुपसंधेहीति तथेति तामुपसमदधा-
देतद्वै तद्गायत्र्यै तृतीयसवने यद्वैश्वदेवस्यो-
त्तरे प्रतिपदो यश्चानुचरः सा द्वादशा-
क्षरा भूत्वा तृतीयसवनमुदयच्छत्, इति ।

वैश्वदेवशस्त्रस्य प्रतिपदनुचरावुपरिष्टादुदाहरिष्येते ।

उक्तमर्थं निगमयति—

ततो वा अष्टाक्षरा गायत्र्यभवदेकादशाक्षरा

त्रिष्टुब्द्वादशाक्षरा जगती, इति ।

वेदनं प्रशंसति—

सर्वैश्छन्दोभिः समावद्वीर्यैः समावज्जा-
मीभी राध्नोति य एवं वेद, इति ।

गायत्रीं विशेषणविशेषेण प्रशंसति—

एकं वै सत्त्त्रेधाऽभवत्तस्मादाहुर्दातव्यमेवं विदुष
इत्येकं हि सत्त्त्रेधाऽभवत् ॥ २८ ॥ इति ।

तद्गायत्र्याः स्वरूपं पूर्वं चतुरक्षररूपेणैकमेव सत्पश्चादधिकाक्षरचतुष्टयत्व-संपादनेन स्वकीयानामष्टाक्षराणां त्रिष्टुब्जगत्योः प्रवेशेन च त्रेधाऽभवत् । यस्मादीदृशो गायत्र्या महिमा तस्मादेवंविदुषे गायत्रीमहिमानं ज्ञातवते पुरुषाय लोके सुवर्णादिकं दातव्यमित्येवं धर्मरहस्यविदः प्राहुः । यस्माद्गायत्रीस्वरूपमेकमेव सत्त्रेधाऽभूत्तस्मात्तद्विदे दानमुचितमेवेत्युपसंहारार्थे पुनर्वचनम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-
भाष्ये त्रयोदशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (२८) [ ९९ ] ।

---

एवं तावत्तृतीयसवनमवतारयितुं सोमाहरणकथा वर्णिता । अथ तृतीय-सवनमुच्यते । तत्र वैश्वदेवाग्निमारुतयोः क्लृप्तिः संगृह्यते—

"स्याद्वैश्वदेवे सवितुः पुनस्तु द्यावापृथिव्यार्भववैश्वदेविका ।
वैश्वानरीयं मरुतां च शंसनं स्युर्जातवेदस्यमिहाऽऽग्निमारुते" ॥

तृतीयसवनस्याऽऽदावादित्यग्रहं विधत्ते--

ते देवा अब्रुवन्नादित्यान्युष्माभिरिदं सवन-
मुद्यच्छामेति तथेति तस्मादादित्यारम्भणं
तृतीयसवनमादित्यग्रहः पुरस्तात्तस्य, इति ।

तृतीयसवनं निर्वहन्त्या जगत्या अक्षरसंपूर्तिमवगतवन्तः । ते देवा आदित्यान्द्वादशसंख्याकान्प्रत्येवमब्रुवन् । हे, आदित्या युष्माभिः सहिता वयमिदं तृतीयसवनमुद्यच्छाम निर्वाहं करवामहा इति । आदित्याश्च तथेत्यङ्गीकृतवन्तः ।

यस्मादारम्भे देवैरादित्यसाहित्यं प्रार्थितं तस्मादादित्यारम्भणं तृतीयसवनमादित्यग्रह आरम्भणे सर्वेषां ग्रहाणामादौ यस्य सवनस्य तदिदमादित्यारम्भणं सा एवार्थ आदित्यग्रह इत्यादिना स्पष्टी क्रियते। तस्य तृतीयसवनस्य पुरस्तादादावादित्यदेवताको ग्रहः कर्तव्यः।

तस्य ग्रहस्य याज्यां विधत्ते—

यजत्यादित्यासो अदितिर्मादयन्तामिति मद्वत्या रूपसमृद्धया मद्वद्वै तृतीयसवनस्य रूपम्, इति।

अदितेः पुत्रा आदित्यास्ते च तन्माताऽदितिश्च मादयन्तां ग्रहेणानेन तुष्यन्तु। इत्येषा याज्या मद्वती। मदी हर्ष इत्यस्माद्धातोरुत्पन्नेन मच्छब्देन युक्ता। तस्यामादित्यानामदितेश्च हर्षवर्णनाद्विवक्षितदेवताविषयत्वेन रूपसमृद्धा। तृतीयसवनस्य स्वरूपमपि मद्वद्वै हर्षोपेतमेव। तत्समाप्तौ देवतानां यजमानानामृत्विजां [च] हर्षोत्पत्तेः।

इतरग्रहवत्प्रसक्तावनुवषट्कारभक्षौ प्रतिषेधति—

नानुवषट्करोति न भक्षयति संस्था वा एषा यदनुवषट्कारः संस्था भक्षः प्राणा आदित्या नेत्प्राणान्संस्थापयानीति, इति।

अनुवषट्कारभक्षयोर्ग्रहसमाप्तिरूपत्वादादित्यानां च प्राणरूपत्वादादित्यग्रहं समापयन्नहं प्राणानेव समापितवान्भविष्यामीति भीत्या तत्समाप्तिरूपावनुवषट्कारभक्षौ न कुर्यात्। नेदिति भयद्योतनार्थो निपातः।

अथ सावित्रग्रहं वैश्वदेवशस्त्रस्य प्रतिपदं च विधत्ते—

त आदित्या अब्रुवन्सवितारं त्वयेदं सह सवनमुद्यच्छामेति तथेति तस्मात्सावित्री प्रतिपद्भवति वैश्वदेवस्य सावित्रग्रहः पुरस्तात्तस्य यजति दमूना देवः सविता वरेण्य इति मद्वत्या रूपसमृद्धया मद्वद्वै तृतीयसवनस्य रूपं नानुवषट्करोति न भक्षयति संस्था वा एषा यद-

---

आदित्यासो अदिति०—७-५१-२।

नुवषट्कारः संस्था भक्षः प्राणः
सविता नेत्प्राणं संस्थापयानीति, इति ।

वैश्वदेवशस्त्रस्य तत्सवितुर्वृणीमह इत्येषा सवितृदेवताका प्रतिपत्प्रारम्भ-रूपा कर्तव्या दमूना देव इत्यादिका ग्रहस्य याज्या। सा च संहितायामनाम्ना-तत्वात्सूत्रकारेण पठिता। तस्यां च, असदन्नेन मिष्ट्य इति मदिधातुः प्रयुक्तः। तस्मादियं मद्वती । अन्यत्सर्वमादित्यग्रहवद्व्याख्येयम् ।

अथ निवित्पदद्वारा सावित्रग्रहं प्रशंसति—

उभे वा एष एते सवने विपिबति यत्स-
विता प्रातःसवनं च तृतीयसवनं च तय-
त्पिबवत्सावित्र्यै निविदः पदं पुरस्ताद्भ-
वति मद्वदुपरिष्टादुभयोरेवैनं तत्सवनयोरा-
भजति प्रातःसवने च तृतीयसवने च, इति ।

ग्रहस्य देवता यः सविताऽस्ति, एष देवः प्रातःसवनं च तृतीयसवनं चेत्येते उभे अपि सवने विपिबति विलक्षणत्वेन पिबति । तत्कथमिति तदे-वोच्यते । वैश्वदेवशस्त्रे सावित्र्यै सवितृदेवताकाया निविदः पदं पिबवत्पिबति-धातुयुक्तं पुरस्तादादौ भवति मद्वत्पदं मदधातुयुक्तमुपरिष्टादन्ते भवति । तेन प्रातःसवने च तृतीयसवने चोभयोरपि सवनयोरेनं सवितारमाभजति भावितं[1] करोति । सविता देवः सोमस्य पिबत्वित्येतन्निविद आदौ प्रयुज्यमानं पदं पिबवत्पदम् । तथाऽन्ते प्रयुज्यमानं सविता देव इह श्रवदिह सोमस्य मत्स-दिति मद्वत्पदमप्युदाहरणीयम् । तयोरुभयोः पदयोः सवनद्वयरूपयोर्विलक्षण-त्वात्सवितुः पानमिति विलक्षणमिति द्रष्टव्यम् । एवंविधसवितृदेवताकत्वात्प्र-शस्तोऽयं ग्रह इत्यभिप्रायः । अथवा निवित्पदविधानार्थमिदं वाक्यं द्रष्टव्यम् ।

अथ तस्मिन्वैश्वदेवशस्त्र एकया च दशभिश्च स्वभूत इत्येतां वायुदेवताका-मृचं विधत्ते—

बह्व्यः प्रातर्वायव्याः शस्यन्त एका तृतीयसवने
तस्मादूर्ध्वाः पुरुषस्य भूयांसः प्राणा यच्चावाञ्चः, इति ।

---

१ ख. झ. ञ. ट. भाविनं ।

वायुरग्रे गा इत्याद्या वायव्या ऋचो बह्व्यः प्रातःसवने शस्यन्ते । तृतीय-सवने तु एकैव पूर्वोदाहृता । तस्मात्प्रातःसवने वायुदेवताकानां भूयस्त्वात्पु-रुषस्यापि प्रातःसवनीयस्थानीये मुखे वर्तमानत्वादूर्ध्वाश्चक्षुर्घ्राणादयः प्राणा भूयांसः । यच्च ये केचिदवाञ्चो नाभेरर्वाचीने तृतीयस्थानीये देशे वर्तमाना पायुगुह्यादयोऽवाञ्चः प्राणाः । अल्पीयांस इति शेषः ।

तस्मिन्नेव वैश्वदेवशस्त्रे द्यावापृथिवीदेवताकं सूक्तं विधत्ते—

द्यावापृथिवीयं शंसति द्यावापृथिवी वै प्रतिष्ठे इयमेवेह प्रतिष्ठाऽसावमुत्र तद्यद्द्यावापृथिवीयं शंसति प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति ॥२९॥ इति ।

इह मनुष्यजन्मनीयमेव भूमिः प्रतिष्ठाऽऽश्रयः । अमुत्र जन्मान्तरेऽसावेव द्युलोकः प्रतिष्ठाऽऽश्रयः । एवं द्यावापृथिव्यावेव प्रतिष्ठे यस्मात्तस्मात्तदीय-सूक्तशंसनेनैनं यजमानं प्रतिष्ठारूपयोर्द्यावापृथिव्योरेवावस्थापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्रा-ह्मणभाष्ये त्रयोदशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (९९) [१००] ।

---

प्र द्यावा यज्ञैः पृथिवी ऋतावृधेत्येतद्द्यावापृथिवीयं सूक्तं विधाय तक्ष-न्रथं सुवृतमित्येतदार्भवं सूक्तं विधत्ते—

आर्भवं शंसति, इति ।

ऋभुनामका देवा यस्मिन्सूक्ते सन्ति तदिदमार्भवम् । तस्य सूक्तस्य प्रथमा-यामृचि तृतीयपादे तक्षन्पितृभ्यामृभवो युवद्वय इति तद्देवताकत्वं प्रतीयते ।

अथ धाय्ये विधातुमाख्यायिकामाह—

ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयंस्तेभ्यः प्रातःसवने वाचि कल्पयिषंस्तानग्निर्वसुभिः प्रातःसवनादनुदत तेभ्यो माध्यंदिने सवने वाचि कल्पयिषंस्तानिन्द्रो रुद्रैर्माध्यंदिनात्स-वनादनुदत तेभ्यस्तृतीयसवने वाचि कल्पयि-षंस्तान्विश्वे देवा अनोनुद्यन्त नेह पास्यन्ति

नेहेति स प्रजापतिरब्रवीत्सवितारं तव वा इमेऽन्तेवासास्त्वमेवैभिः संपिबस्वेति स तथेत्यब्रवीत्सविता तान्वै त्वमुभयतः परिपिबेति तान्प्रजापतिरुभयतः पर्यपिबत्, इति।

देवेषु सर्वेषु मध्य ऋभुनामकाः केचन देवत्वं प्राप्ता मनुष्यविशेषाः प्रजापतिमुद्दिश्य तपः कृत्वा तेन तपसा सोमपीथमभ्यजयन्सोमपानमभिलक्ष्य जितवन्तः। प्रजापतेः सकाशात्तल्लब्धवन्त इत्यर्थः। स प्रजापतिरन्या देवताश्च तेभ्य ऋभुभ्यः प्रातःसवने वाचि कल्पयिषन्सोमपानं कल्पयितुमैच्छंस्तदानीं प्रातःसवनाभिमान्यग्निर्देवः स्वभृत्यैर्वसुभिः सह तस्मात्प्रातःसवनात्तानृभून्नुदत निराकरोत्। तथेन्द्रो रुद्रैः सह माध्यंदिनात्सवनान्निराकरोत्। विश्वे देवास्तृतीयसवनादनोनुद्यन्त भृशं निराकुर्वन्। निराकरणप्रकारः स च नेहेति वाक्येन पुनः पुनरनूद्यते। इह तृतीयसवन ऋभवो न पास्यन्ति। विश्वेषां देवानां प्रत्येकं निराकरणवाक्येन संबन्धान्नेहेति नियुक्तम्। ततः स प्रजापतिर्निराकृतानृभून्दृष्ट्वा सवितारमब्रवीत्। हे सवितस्तवेम ऋभवोऽन्तेवासाः समीपवासिनः शिष्या अतस्त्वमेवैभिः सह सम्यक्पिबस्व। तथेत्यङ्गीकृत्य सविता प्रजापतिमिदमब्रवीत्। हे प्रजापते त्वं तान्वै तानेव ऋभूनुभयतः पिब तेषामृभूणामुभयोः पार्श्वयोः स्थित्वा त्वमपि सोमपानं कुरु। एवमुक्तः प्रजापतिस्तथैवाकरोत्।

अथ धाय्ये विधत्ते—

ते एते धाय्ये अनिरुक्ते प्राजापत्ये शस्येते अभित आर्भवं सुरूपकृत्नुमूतयेऽयं वेनश्चोदयत्पृश्निगर्भा इति प्रजापतिरेवैनांस्तदुभयतः परिपिबति तस्माद्दु श्रेष्ठी पात्रे रोचयत्येव यं कामयते तम्, इति।

सुरूपकृत्नुमित्येका धाय्याऽयं वेन इति द्वितीया ते एते धाय्ये आर्भवसूक्ते अभितः शस्येते। सुरूपकृत्नुमित्येषा सूक्तात्पूर्वं शंसनीया। अयं वेन इत्येषा सूक्तात्पश्चाच्छंसनीया। कीदृश्यौ धाय्ये। अनिरुक्ते निःशेषेणोक्तो देवो निरुक्तस्तादृशो ययोर्धाय्ययोर्नास्ति ते अनिरुक्ते। न खल्वनयोर्ऋचोरीदृशो

---

सुरूपकृत्नुमूतये०—१—४—१। अयं वेनश्चोदय०—१०—१२३—१।

देव इति सहसा निर्णेतुं शक्यते। प्रजापतेरपि जगत्सृष्टेः पूर्वं मूर्तस्य निर्वक्तुमशक्यत्वात्सोऽप्यनिरुक्तोऽतो योग्यत्वात्ते उभे प्रजापतिदेवताके। एतयोर्धाय्ययोः शंसने प्रजापतिरेवैनानृभूनुभयतः परिपिबति। यस्मात्प्रजापतिरग्निर्वस्वादिदेवतानामृभुषु रुच्यभावे सति पितृद्वारा बलाद्रुचिमुत्पादितवांस्तस्मादु तस्मादेव कारणाल्लोकेऽपि श्रेष्ठी कश्चिद्धनपतिर्यं स्वकीयं भृत्यमितरैरङ्गीकृतमपि सर्वेभ्यो रोचयितुं कामयते तं भृत्यमाचारहीनं पात्रे प्रतिग्रहयोग्यस्थाने बलात्सर्वेभ्यो रोचयत्येव।

अथापरमृग्द्वयं विधत्ते—

> तेभ्यो वै देवा अपैवाबीभत्सन्त
> मनुष्यगन्धात्त एते धाय्ये अन्तरदधत
> येभ्यो मातैवा पित्र इति ॥ ३० ॥ इति।

* अग्निवस्वादयो देवास्तेभ्य ऋभुभ्योऽपैव स्वयमपगता एव सन्तोऽबीभत्सन्त, एवं मनसि बीभत्सां कृतवन्तः। कस्मात्कारणादिति तदुच्यते। मनुष्यगन्धादिति। एते मनुष्या अस्मत्पङ्क्तियोग्या न भवन्तीति शङ्कयेत्यर्थः। बीभत्सां प्राप्यैते वक्ष्यमाणे द्वे धाय्ये अन्तरदधत, ऋभूणामत्र्यादीनां च मध्येऽन्तर्धानं व्यवधानमकुर्वत। के ते धाय्ये इत्युच्येते। येभ्यो माता मधुमदित्येका। एवा पित्रे विश्वदेवायेत्यपरा। अयं वेन इत्येतस्मात्पूर्वमेतदुभयं शंसेदित्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये षष्ठः खण्डः॥ ६॥ (३०) [१०१]।

---

* अत्र ब. ट. पुस्तकयोर्मन्त्रद्वयस्य व्याख्यानं वर्तते तद्यथा—"येभ्यो मातेति—माता सर्वस्य निर्मात्री पृथिवी। येभ्यो देवेभ्यो देवतार्थं मधुमन्माधुर्योपेतं पयः सारभूतं क्षीरं पिन्वते क्षरति तथाऽदितिरदीनाऽद्रिबर्हा मेघैः परिवृढा प्रवृद्धा परिवृढमेघा वा द्यौश्च पीयूषं पिन्वते। द्यावापृथिव्यौ हविरुत्पादयत इत्यर्थः। ऋषिरात्मानं संबोध्याऽऽह। उक्थशुष्मान्स्तुतिबलान्वृषभरान्वृष्टेराहर्तॄन्। हृप्रहोरिति भः। स्वप्नसः सुकर्मणस्तानादित्यानदितेः पुत्रान्देवान्स्वस्तयेऽविनाशायानुमदाऽनुस्तुहि। माद्यतेर्लेटि व्यत्येन शप्। मन्दतेर्वा स्तुत्यर्थस्यानित्यमागमशासनमिति नुमभावः। एवा पित्र इति। पित्रे पालकाय विश्वदेवाय सर्वदेवतारूपाय। देवानां मन्त्रप्रतिपाद्यत्वात्। अस्य च मन्त्राभिमानित्वादविश्वदेवत्वम्। यद्वाऽत्र देवशब्दः स्तुत्यर्थः। सर्वैः स्तुत्याय वृष्णे वर्षकाय बृहस्पतये देवायैवैवमुक्तप्रकारेण यज्ञैस्तत्साधनैर्हविर्भिराज्यचर्वादिलक्षणैर्नमसा स्तुत्या च बिधेम परिचरेम। हे बृहस्पते सुप्रजाः शोभनपुत्रा वीरवन्तो वीर्योपेता वयं रयीणां धनानां पतयः स्याम"।

अथ विश्वदेवदेवताकमा नो भद्राः [१-८९-१] इत्येतत्सूक्तं विधत्ते—

वैश्वदेवं शंसति, इति ।

लौकिकदृष्टान्तेन प्रशंसन्नाहावं विधत्ते—

यथा वै प्रजा एवं वैश्वदेवं तद्यथाऽन्तरं जनता एवं सूक्तानि यथाऽरण्यान्येवं धाय्यास्तदुभयतो धाय्यां पर्याह्वयते तस्मात्तान्यरण्यानि सन्त्यनरण्यानि मृगैश्च वयोभिश्चेति ह स्माऽऽह, इति ।

लोके यथा प्रजा एवमत्र वैश्वदेवशस्त्रं प्रजाशब्देन तन्निवासस्थानं राज्यमुपलक्ष्यते । राज्यसदृशं शस्त्रमित्यर्थः । तत्तत्र प्रजाशब्देन राज्ये विवक्षिते राज्येऽन्तरमभ्यन्तरमभ्यन्तरे जनता जनसमूहा यथा तिष्ठन्ति, एवं तस्मिन्सूक्ते शस्त्रे सूक्तानि तिष्ठन्ति । यथा वाऽरण्यानि राज्ये क्वचित्क्वचिद्भवन्ति, एवमस्मिञ्शस्त्रे धाय्याः क्वचित्प्रक्षिप्यन्ते । तथा सत्यरण्यस्थानीयां धाय्याः मुभयतः पर्याह्वयते । शोंसावोमित्येष मन्त्रः पर्याहावः । अस्य धाय्यायाः पार्श्वयोर्यस्मात्पाठस्तस्माल्लोकेऽपि बहुवृक्षसंकीर्णानि स्थानानि स्वभावतोऽरण्यानि मनुष्यशून्यानि सन्त्यपि मृगैश्च पक्षिभिश्च संकीर्णान्यनरण्यान्यशून्यान्येवेति कश्चिदभिज्ञ आह स्म ।

एवमेकेन दृष्टान्तेन पर्याहावं प्रशस्य पुनरप्यन्येन दृष्टान्तेन प्रशंसति—

यथा वै पुरुष एवं वैश्वदेवं तस्य यथाऽवान्तरमङ्गान्येवं सूक्तानि यथा पर्वाण्येवं धाय्यास्तदुभयतो धाय्यां पर्याह्वयते तस्मात्पुरुषस्य पर्वाणि शिथिराणि सन्ति दृढ्ळानि ब्रह्मणाऽऽहितानि धृतानि, इति ।

लोके यथा पुरुषो हस्तपादादिमान्मनुष्यदेहस्तद्वदिदं वैश्वदेवशस्त्रं तस्य शरीरस्यावान्तरमभ्यन्तरप्रदेशाङ्गान्यवयवा यथा वर्तन्त एवं शस्त्रस्याभ्यन्तरे सूक्तानि निविष्टानि । यथा तेषामवयवानां संधय एवमेता धाय्याः शस्त्रे तिष्ठन्ति । तथा सति धाय्या उभयपार्श्वपर्वाणि शिथिराणि पूर्वं शिथिलानि

१ क. ख. ग. ङ. °ते । शंसा° । २ क. ख. ङ. ज. ट. धाय्याः ।

सन्त्यपि पश्चात्प्रयत्नेन धारितानि दृढानि संपद्यन्ते ब्रह्म वा आहाव इति श्रुतत्वादाहावरूपेण ब्रह्मणैव धाय्यारूपाणि पर्वाणि धृतानि भवन्ति।

अथ धाय्यानां शस्त्रयाज्यानां च प्रकृतौ विकृतौ चान्यत्वं निराकृत्यैकरूपत्वं विधत्ते—

मूलं वा एतद्यज्ञस्य यद्धाय्याश्च याज्याश्च तद्यदन्या अन्या धाय्याश्च याज्याश्च कुर्युरुन्मूलमेव तद्यज्ञं कुर्युस्तस्मात्ताः समान्य एव स्युः, इति।

धाय्यानां शस्त्रयाज्यानां वृक्षमूलवद्यज्ञमूलता। तत्प्रकृतिगताः परित्यज्य विकृतावन्यस्वीकारे यज्ञरूपो वृक्ष उन्मूलितः स्यात्। तस्मात्प्रकृतौ याः सन्ति ता एव विकृतावित्युभयत्र समान्य एवैकविधा एव कर्तव्याः।

वैश्वदेवशस्त्रमवयवशः प्रशस्य समुदायाकारेण प्रशंसति—

पाञ्चजन्यं वा एतदुक्थं यद्वैश्वदेवं सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चैतेषां वा एतत्पञ्चजनानामुक्थं सर्व एनं पञ्चजना विदुः, इति।

यद्वैश्वदेवनामकमुक्थं शस्त्रमस्ति तदेतत्पाञ्चजन्यं वै पञ्चविधानां जनानां संबन्ध्येव। स एवार्थः सर्वेषामित्यादिना स्पष्टीक्रियते। ये पञ्चविधा जनाः सन्ति तेषां सर्वेषामेव संबन्ध्येतच्छस्त्रम्। पञ्चविधत्वमेव मनुष्याणामित्यादिनोच्यते। अग्नीन्द्रादिदेवगण एको वर्गः। ब्रह्मक्षत्रियादिमनुष्यगणो द्वितीयो वर्गः। गन्धर्वाणामप्सरसां वर्गस्तृतीयः। सर्पाणां वर्गश्चतुर्थः। पितॄणां वर्गः पञ्चमः। एतेषां पञ्चविधानां जनानां तुष्टिहेतुत्वात्तदीयमेतच्छस्त्रम्। एनं वैश्वदेवशस्त्रस्य शंसितारं होतारं सर्वे पञ्चजना विदुर्जानन्ति। तेष्वस्य कीर्तिः प्रसरतीत्यर्थः।

वेदनं प्रशंसति—

एनं पञ्चिन्यै जनतायै हविनो गच्छन्ति य एवं वेद, इति।

जनानां देवमनुष्याणां समूहो जनता। सा च पञ्चसंख्योपेतत्वात्पञ्चिनी। तस्यै तत्प्रीत्यर्थं हविनो होतुं कुशलाः पुरुषा एनं वेदितारमागच्छन्ति।

अथ शंसनपूर्वकाले दिग्ध्यानं विधत्ते—

सर्वदेवत्यो वा एष होता यो वैश्वदेवं
शंसति सर्वा दिशो ध्यायेच्छंसिष्य-
न्सर्वास्वेव तद्दिक्षु रसं दधाति, इति।

यो होता वैश्वदेवं शस्त्रं शंसति एष सर्वदेवत्यो वै सर्वा देवता अस्येति तत्परितोषहेतुरित्यर्थः। अतः सोऽयं शंसितुमुद्युक्तः सर्वा दिशो मनसा ध्याये-त्तेन शंसनेन सर्वास्वेव तद्दिक्षु रसं दधाति।

क्वचिद्ध्यानं विधत्ते—

यस्यामस्य दिशि द्वेष्यः स्यान्न तां
ध्यायेदनुहायैवास्य तद्वीर्यमादत्ते, इति।

अस्य होतुर्द्वेष्यः शत्रुर्यस्यां दिशि वसति तामेकां दिशं न ध्यायेत्। तथा सति, अनुहायैव द्वेष्यस्य पृष्ठतो गत्वैव तदीयं वीर्यं सर्वं स्वी करोति।

शस्त्रस्य परिधानीयामृचं विधत्ते—

अदितिर्द्यौरदितिरन्तरिक्षमित्युत्तमया परिदधा-
तीयं वा अदितिरियं द्यौरियमन्तरिक्षम्, इति।

अखण्डितत्वाददीनत्वाद्वा भूमिरेवादितिरित्युच्यते। सेयं भूमिरेव द्युलोक-रूपाऽन्तरिक्षरूपा चास्यां भूमौ कर्म कृत्वा तत्तल्लोकप्राप्तेः संपादयितुं शक्यत्वात्।

द्वितीयपादमनूद्य व्याचष्टे—

अदितिर्माता स पिता स पुत्र इती-
यं वै मातेयं पितेयं पुत्रः, इति।

येयमदितिर्भूमिः सैव माता। सोऽदितिरूप एव पिता। सोऽदितिरूप एव पुत्रः। इयं वा इत्यादिनोक्तार्थप्रसिद्धिरुच्यते। सत्यां भूमौ मातापितृ(ता)-पुत्रादिभिरवस्थातुं शक्यत्वात्तेषामदितिरूपत्वं प्रसिद्धमित्यर्थः।

तृतीयपादमनूद्य व्याचष्टे—

विश्वे देवा अदितिः पञ्चजना इत्यस्या

---

अदितिर्द्यौरदिति०—१-८९-१।

वै विश्वे देवा अस्यां पञ्चजनाः, इति ।

विश्वेषां देवानां भूमौ मनुष्यैः पूज्यमानत्वात्पञ्चजनानां देवमनुष्यादीनां भूमाववस्थानाददितेस्तद्रूपत्वम् ।

चतुर्थं पादमनूद्य व्याचष्टे—

अदितिर्जातमदितिर्जनित्वमितीयं
वै जातमियं जनित्वम्, इति ।

जातं पूर्वमुत्पन्नरूपं जनित्वमितःपरमुत्पत्स्यमानं प्राणिरूपं तयोरुभयोर्भूमौ संभवाददितेस्तद्रूपत्वम् ।

परिधानीयाया अस्या ऋचः शंसने प्रकारविशेषं विधत्ते—

द्विः पच्छः परिदधाति चतुष्पादा वै पशवः
पशूनामवरुद्ध्यै सकृदर्धर्चशः प्रतिष्ठाया एव
द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव
तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, इति ।

त्रिः प्रथमां त्रिरुत्तमामन्वाहेति विधेः सार्वत्रित्वादस्याः परिधानीयाया स्त्रिरावृत्तिः प्राप्ता । तत्र द्वयोरावृत्त्योः पच्छः शंसेत् । एकैकस्मिन्पादेऽवसायावसाय शंसनं कुर्यात् । तत्र पादानां चतुष्टयेन पशुसाम्यात्पशुप्राप्तिर्भवति । तृतीयस्यामावृत्तावर्धर्चशः शंसेत् । अर्धर्चेऽवसाय पठेदित्यर्थः । तच्च प्रतिष्ठायै स्थैर्येणावस्थानार्थमेव भवति । किंच पुरुषोऽयं द्विप्रतिष्ठः पादद्वयोपेतः पशवश्चतुष्पादास्तथा सत्युभयविधशंसनेन द्विपादं यजमानमेव चतुष्पात्सु पशुषु प्रतिष्ठापयति ।

परिधानकाले भूमिस्पर्शं विधत्ते—

सदैव पञ्चजनीयया परिदध्यात्तदुपस्पृश-
न्भूमिं परिदध्यात्तयस्यामेव यज्ञं संभरति
तस्यामेवैनं तदन्ततः प्रतिष्ठापयति, इति ।

सदैव सर्वेष्वपि यज्ञप्रयोगेषु पञ्चजनीयया विश्वे देवा अदितिः पञ्चजना इत्युक्तत्वादियमृक्पञ्चजनीया । तया परिधानं समापनं यदा कुर्यात्तदानीं

१ ख. झ. ञ. ट. °त्पन्नप्रा° ।

भूमिमुपस्पृशन्परिदध्यात् । तथा सति यस्यामेव भूमौ यज्ञं संभरति, अनुष्ठातुं यज्ञसाधनानि संपादयति तस्यामेव भूमावेनं यज्ञमनेनोपस्पर्शनेनान्ततः प्रतिष्ठापयति ।

शस्त्रयाज्यां विधत्ते—

विश्वे देवाः शृणुतेमं हवं म इति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति यथाभागं तद्देवताः प्रीणाति ॥ ३१ ॥ इति ।

वैश्वदेवशस्त्रशंसनादूर्ध्वं विश्वे देवाः शृणुतेत्येतां वैश्वदेवीं याज्यां पठेत् । तस्यां ये अन्तरिक्षे य उपद्यविष्ठेत्यादिना भिन्नवर्गाणां देवगणानामभिधानात्तासां देवतानां स्वस्वभागमतिक्रम्य प्रीतिं करोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये सप्तमः खण्डः ॥ ७ ॥ (३१) [१०२] ।

---

अथ घृतयागसौम्ययागयोर्याज्यां विधत्ते—

आग्नेयी प्रथमा घृतयाज्या सौमी सौम्ययाज्या वैष्णवी घृतयाज्या त्वं सोम पितृभिः संविदान इति सौम्यस्य पितृमत्या यजति, इति ।

सौम्यचरोरुभयतो घृतसाध्यौ द्वौ यागावनुष्ठेयौ । तत्राग्निदेवताका विष्णुदेवताका चेति द्वे याज्ये । घृताहवनो घृतपृष्ठो अग्निरित्याग्नेयी प्रथमा याज्या । उरु विष्णो विक्रमस्वेति वैष्णवी द्वितीया घृतयाज्या । अस्ति कश्चित्सोमदेवताकश्चरुस्तस्य त्वं सोमेति सौमी याज्या । तत्र पितृभिः संविदान इति श्रुतत्वादियं पितृमती तां याज्यां सौम्यचरौ पठेत् । तस्य चरोः पुरस्तादाग्नेययाज्यया घृतयागः । उपरिष्टाद्वैष्णवयाज्यया घृतयागः । तद्याज्याद्वयमाश्वलायनेन पठितम् ।

सौमीं याज्यां प्रशंसति—

घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति तस्यैतामनुस्तरणीं कुर्वन्ति यत्सौम्यः पितृभ्यो वा अनु-

---

विश्वे देवाः शृणुतेमं०—६-५२-१३ । त्वं सोम पितृभिः०—८-४८-१३ ।

स्तरणी तस्मात्सौम्यस्य पितृमत्या यजति, इति ।

ऋत्विजः सोममभिषुण्वन्तीति यदस्ति सोऽयं सोमस्य वध एव । तत्र यः सौम्यश्चरुरस्ति, एतां सौम्यचरुरूपां तस्य मृतस्य सोमस्यानुस्तरणीं कुर्वन्ति । मृतस्य दीक्षितस्य दहनकाले कांचिद्वृद्धां गां हत्वा दीक्षितावयवेषु गोरवयवानवस्थाप्य दहेत् । सेयं गोर्मृतं दीक्षितमनु मृतत्वाद्धिंसितत्वाच्चानुस्तरणीत्युच्यते । यस्मात्सा पितृभ्यो योग्या तस्मात्पितृमत्या याज्यया सौम्ययागस्य हविर्यजेत् ।

घृतयागसहितं सौम्यं चरुं संगृह्य प्रशंसति—

अवधिषुर्वा एतत्सोमं यदभ्यसुषुवुस्तदेनं पुनः संभावयन्ति, इति ।

अभ्यसुषवुरभितः सोमं सुतवन्त इति यदस्ति, एतेन सोममवधिषुर्वा ऋत्विजो हतवन्त एव । तस्मादेनं व्यथितं सोमं घृतचरुभ्यां व्यथापरिहाराय संभावयन्ति ।

संगृह्य प्रशस्य देवताद्वारा पुनर्विस्तरेण प्रशंसां दर्शयति—

पुनराप्याययन्त्युपसदां रूपेणोपसदां किल वै तद्रूपं यदेता देवता अग्निः सोमो विष्णुरिति, इति ।

योऽयं हतः सोमस्तं सोममुपसदां रूपेण संपादितेन पुनराप्याययन्ति । अग्निः सोमो विष्णुरिति या एतास्तिस्रो देवतास्तदेतदुपसदामेव स्वरूपम् । तत्राप्येतस्य देवतात्रयस्य विद्यमानत्वात् ।

अथ होतुराज्यावेक्षणं विधत्ते—

प्रतिगृह्य सौम्यं होता पूर्वश्छन्दोगेभ्योऽवेक्षेत, इति ।

हुतशेषं सौम्यं चरुमध्वर्युणा दत्तं होता प्रतिगृह्य चरुमध्ये सिक्ते बहुले घृते छन्दोगेभ्य उद्गातृभ्यः स्वयं पूर्वभावी सन्स्वकीयां देहच्छायामवेक्षेत ।

अत्र पूर्वपक्षमुत्थाप्य दूषयति—

तं हैके पूर्वं छन्दोगेभ्यो हरन्ति तत्तथा न कुर्याद्वषट्कर्ता प्रथमः सर्वभक्षान्भक्षयतीति ह स्माऽऽह तेनैव रूपेण तस्माद्वषट्कर्तैव पूर्वोऽवेक्षेताथैनं छन्दोगेभ्यो हरन्ति ॥ ३२ ॥ इति ।

केचन याज्ञिका होतुराज्यावेक्षणात्पूर्वमेव तं घृतयुक्तं सौम्यं चरुं छन्दोगेभ्यः समर्पयन्ति । तत्समर्पणं तथा न कुर्यात् । हविःशेषभक्षणेषु वषट्कर्ता होता प्रथमः पूर्वभावी सन्हविःशेषान्भक्षयति । इत्येवमभिज्ञो महर्षिराह स्म । तस्मात्कारणात्तेनैव रूपेण भक्षणक्रमेणैवावेक्षणेऽपि होतैव प्रथमो भूत्वाऽवेक्षेत । अनन्तरमेवैनं सौम्यं चरुं छन्दोगेभ्यः समर्पयेयुः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्यायेऽष्टमः खण्डः ॥ ८॥ (३२) [१०३]।

---

अथाऽऽग्निमारुतशस्त्रं वक्तव्यं तदर्थमादावुपाख्यानमाह—

प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये तामृश्यो भूत्वा रोहितं भूतामभ्यैत्तं देवा अपश्यन्नकृतं वै प्रजापतिः करोतीति ते तमैच्छन्य एनमारिष्यत्येतमन्योन्यस्मिन्नाविन्दंस्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः संभृता एष देवोऽभवत्तदस्यैतद्भूतवन्नाम, इति ।

पुरा कदाचित्प्रजापतिः स्वकीयां दुहितरमभिलक्ष्य भार्यात्वेन ध्यानमकरोत् । तस्यां दुहितरि महर्षीणां मतभेद आसीत् । अन्ये केचन महर्षयो दिवं द्युलोकदेवतां ध्यातवानित्याहुः । अपरे तु महर्षय उषसमुषःकालदेवतां ध्यातवानित्याहुः । ऋश्यो मृगविशेषः । तथा चाभिधानकार आह—गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगा इति । स प्रजापतिस्तथाविध ऋश्योऽभूत् । सा च दुहिता रोहितं लोहितं भूता प्राप्ता । ऋतुमती जातेत्यर्थः । तादृशीं तां दुहितरमभ्यैदभिगतवान् । मिथुनधर्मं प्राप्तवानित्यर्थः । तं दुहितृगामिनं प्रजापतिं देवाः परस्परमिदमब्रुवन् । अयं प्रजापतिरकृतं वै, अकर्तव्यमेव निषिद्धाचरणं करोतीति विचार्य यः पुरुष एनं प्रजापतिमारिष्यति, आर्तिं प्रापयितुं क्षमस्तादृशं पुरुषमैच्छन्नन्वेषणं कृतवन्तः । कृत्वा चान्योन्यस्मिंस्तेषां मध्ये तं प्रजापतिघातकं नाविन्दन्नालभन्त । त्वं हन्तुं शक्नोषि त्वं हन्तुमिति परस्परं पृष्टेकैकस्य शक्तिराहित्यं निश्चितवन्तः । सर्वेषु देवेषु या एव काश्चिद्घोरतमास्तन्वोऽत्युग्राणि शरीराण्यासंस्ताः सर्वा एकधा समभरन्मेलयित्वैकं शरीरं कृतवन्तस्ता घोरतमास्तन्वः संभृता

एकत्वेन संपादिताः सत्य एष देवोऽभवत्। एष इति हस्तेन प्रदर्श्य रुद्रोऽभिधीयते। तत्तस्मादेव कारणादस्य रुद्रस्यैतल्लोकप्रसिद्धं भूतवद्भूतशब्दोपेतं नाम संपन्नम्। भूतपतिरिति भूतवन्नाम। तच्च तस्य भवत्यर्थानुगमाद्युक्तम्।

एतन्नामवेदनं प्रशंसति—

भवति वै स योऽस्यैतदेवं नाम वेद, इति।

वेदिता भवति वै भूतिमानेव संपद्यते।

अथ तेन रुद्रेण सह देवानां संवादं दर्शयति—

तं देवा अब्रुवन्नयं वै प्रजापतिरकृतमकरिमं विध्येति स तथेत्यब्रवीत्स वै वो वरं वृणा इति वृणीष्वेति स एतमेव वरमवृणीत पशूनामाधिपत्यं तदस्यैतत्पशुमन्नाम, इति।

तं रुद्रं देवा एवमब्रुवन्। हे रुद्रायं प्रजापतिरकृतमकार्निषिद्धाचरणं कृतवांस्तस्मादिमं बाणेन प्रहरेति। स रुद्रस्तदङ्गीकृत्योत्कोचत्वेन पशूनामाधिपत्यं कृतवान्। तस्मात्कारणादस्य रुद्रस्यैतल्लोकप्रसिद्धं पशुपतिरित्येतादृशं पशुशब्दोपेतं नाम संपन्नम्।

तद्वेदनं प्रशंसति—

पशुमान्भवति योऽस्यैतदेवं नाम वेद, इति।

अथ रुद्रप्रजापत्योर्वृत्तान्तं दर्शयति—

तमभ्यायत्याविध्यत्स विद्ध ऊर्ध्व उदप्रपतत्तमेतं मृग इत्याचक्षते य उ एव मृगव्याधः स उ एव स या रोहित्सा रोहिणी यो एवेषुस्त्रिकाण्डा सो एवेषुस्त्रिकाण्डा, इति।

स रुद्रोऽभ्यायत्य बाणयुक्तं धनुरभित आकृष्य तं प्रजापतिमविध्यत्। ऋश्यमृगरूपः स प्रजापतिर्विद्धः सन्नूर्ध्वमुख उदप्रपतत्प्रकर्षेणोत्पतनमकरोत्। तमेतमुत्पतितमृश्यमृगरूपं प्रजापतिमाकाशे दृष्ट्वा सर्व एव ते जना मृग इत्याचक्षते रोहिण्यार्द्रयोर्नक्षत्रयोर्मध्येऽवस्थितं मृगशीर्षनक्षत्रं कथयन्ति। नक्षत्ररूपेण निष्पन्न इत्यर्थः। य उ एव यस्तु रुद्रो मृगव्याधो मृगघाती स रुद्र आकाशे

दृश्यमानः स उ एव लोकप्रसिद्धो मृगव्याध आसीत् । या दुहिता रोहिता रोहिद्रक्तवर्णा मृगी सेयमाकाशे रोहिणीनक्षत्रमभूत् । यो एव या तु रुद्रेण प्रेरितेषुस्त्रिकाण्डाऽनीकं शल्यस्तेजनमित्यवयवत्रयोपेता सो एव सैव लोकप्रसिद्धा काण्डत्रयोपेतेषुर्बाणोऽभवत् ।

अथ मनुष्योत्पत्तिं दर्शयति—

तद्वा इदं प्रजापते रेतः सिक्तमधावत्तत्सरोऽभवत्ते देवा अब्रुवन्मेदं प्रजापते रेतो दुषदिति यदब्रुवन्मेदं प्रजापते रेतो दुषदिति तन्मादुषमभवत्तन्मादुषस्य मादुषत्वं मादुषं ह वै नामैतद्यन्मानुषं सन्मानुषमित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ॥ ३३ ॥ इति ।

मृगरूपेण प्रजापतिना यद्रेतो मृग्यां सिक्तं तदेतदतिबहुत्वाद्भूमौ पतितं सत्प्रवाहरूपेणाधावत् । तच्च क्वचिन्निम्नदेशेऽवस्थाय प्रौढं सरोऽभूत् । ते देवा एवमब्रुवन्प्रजापतेरिदं रेतो मा दुषद्दुष्टमस्पृश्यं मा भूदिति । यस्मान्मा दुषदित्यवदंस्तस्माद्दोषरहितस्य रेतसो मादुषमिति नाम संपन्नम् । जनास्तु दकारस्थाने नकारं प्रक्षिप्य मानुषमिति ब्राह्मणक्षत्रियादिशरीरमाचक्षते । तद्वस्तुतो देवाचारेण दोषरहितत्वान्मादुषमेव । तथा सति मादुषनामयोग्यमपि तच्छरीरं परोक्षेण नाम्ना व्यवहर्तव्यमित्यभिप्रेत्य वर्णव्यत्ययेन मानुषमित्याचक्षते । यस्माल्लोके देववत्पूज्या उत्तमाः पुरुषाः परोक्षप्रिया इव हि प्रत्यक्षे मातापितृनिर्मिते देवदत्तादिनाम्नि न प्रीतिं कुर्वन्ति, किंतूपाध्यायाचार्यस्वामीत्यादिके मातापित्रादीनामक्लृप्तत्वेन परोक्षे नाम्नि प्रीतिं कुर्वन्ति तस्मात्परोक्षत्वाय नकारप्रक्षेपो युज्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये नवमः खण्डः ॥ ९ ॥ (३३) [१०४] ।

---

अथाऽऽदित्यादिदेवतोत्पत्तिं दर्शयति —

तदग्निना पर्यादधुस्तन्मरुतोऽधून्वंस्तदग्निर्न प्राच्यावयत्तदग्निना वैश्वानरेण पर्यादधुस्तन्मरुतोऽधून्वं-

स्तदग्निर्वैश्वानरः प्राच्यावयत्तस्य यद्रेतसः प्रथम-
मुददीप्यत तदसावादित्योऽभवद्यद्द्वितीयमासीत्तद्भृ-
गुरभवत्तं वरुणो न्यगृह्णीत तस्मात्स भृगुर्वारुणिरथ
यत्तृतीयमदीदेदिव त आदित्या अभवन्येऽङ्गारा
आसंस्तेऽङ्गिरसोऽभवन्यदङ्गाराः पुनरवशान्ता उद-
दीप्यन्त तद्बृहस्पतिरभवत्, इति ।

प्रजापतेः संबन्धि यद्रेतो देवैर्दोषरहितं कृतं तद्रेतो देवा अग्निना पर्यादधुः परितो वेष्टितवन्तः । सरोरूपेणावस्थितस्य रेतसो दाहेन द्रवीभावं निवारयितुं परितोऽग्निं प्रज्वलितवन्त इत्यर्थः । यदाऽग्निः प्रज्वलितस्तदा मरुतो वायवस्तद्रेतोऽधून्वञ्शोषणाय वायुसंयुक्तमकुर्वन् । सोऽग्निस्तद्रेतो न प्राच्यावयत् । द्रवीभावात्प्रच्युतं नाकरोत् । द्रवबाहुल्यात्पिण्डाकारं कर्तुं नाशक्नोदित्यर्थः । वैश्वानरो नाम कश्चिदग्निविशेषः प्राणिनामुदरे प्रविश्यान्नपानादिकं पाचयति । तथा च भगवतोक्तम्—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति ॥

तेन वैश्वानरनामकेनाग्निविशेषेण तद्रेतः पूर्ववत्पर्यादधुः । देवैरग्नौ परिक्षिप्ते सति मरुतस्तद्रेतः पूर्ववदधून्वन् । सोऽयं वैश्वानरोऽग्निस्तद्रेतो द्रवीभावात्प्रच्युतमकरोत् । तस्य पिण्डीभूतस्य रेतसो यत्प्रथमं पिण्डरूपमुददीप्यतोद्दीप्तमभूत्तद्रूपमसौ दिवि दृश्यमान आदित्योऽभवत् । द्वितीयं यत्पिण्डरूपमासीत्तदृषिर्भृगुरभवत्तं भृगुं वरुणो न्यगृह्णीत निगृह्य स्वपुत्रत्वेन स्वीकृतवान् । तस्मात्स भृगुर्वारुणिरित्युच्यते । वरुणस्यापत्यं वारुणिः । एतदेवाभिप्रेत्य तैत्तिरीया आमनन्ति—'भृगुर्वै वारुणिः । वरुणं पितरमुपससार' इति । अथानन्तरं तृतीयं पिण्डरूपमदीदेदिवातिशयेन दीप्तमेवाऽऽसीत् । त आदित्या अदितेः पुत्रा देवविशेषा अभवन् । पूर्वमादित्यशब्देन मण्डलवर्ती सूर्य उक्तः । अत्रादितेः पुत्रा इतरे देवा उच्यन्ते । ये रेतःपिण्डा दग्धाः सन्तोऽङ्गारा अभवंस्ते सर्वेऽप्यङ्गिरोनामका ऋषयोऽभवन् । पुनरपि तत्र यदङ्गारा ये केचिदङ्गारा अवशान्ताः शान्तिरहिताः सन्त उददीप्यन्त, उत्कर्षेण दीप्तास्तत्सर्वं बृहस्पतिरभवत् ।

अथ पशुसृष्टिं दर्शयति—

यानि परिक्षाणान्यासंस्ते कृष्णाः पशवोऽभव-
न्या लोहिनी मृत्तिका ते रोहिता अथ यद्भस्माऽऽ-
सीत्तत्परुष्यं व्यसर्पद्गौरो गवय ऋश्य उष्ट्रो गर्दभ
इति ये चैतेऽरुणाः पशवस्ते च, इति ।

अङ्गारेषु शान्तेषु यानि कृष्णवर्णान्यासन्काष्ठानि ते कृष्णवर्णाः पशवोऽभवन् । अग्निदाहेन भूमौ या लोहिनी रक्तवर्णा मृत्तिका तिष्ठति ते रोहिता रक्तवर्णाः पशवोऽभवन् । अत्राग्निस्थाने यद्भस्माऽऽसीत्तत्परुष्यं परुषशरीरजातं भूत्वा व्यसर्पत्, विविधमरण्यादावगच्छत् । किं तत्परुष्यमिति तदेवोच्यते । गौरो गवय ऋश्य इत्येतेऽरण्यमृगाः । उष्ट्रगर्दभौ प्रसिद्धौ । एवमादिकं परुषशरीरम् । येऽप्येतेऽरुणाः पशवस्ते च व्यसर्पन् ।

एवमुपाख्यानेनाऽऽग्निमारुतशस्त्रस्योपोद्घातमभिधाय तस्मिञ्शस्त्रे शंसनीयामेकामृचं विधत्ते—

तान्वा एष देवोऽभ्यवदत मम वा इदं
मम वै वास्तुहमिति तमेतयर्चा निर-
वादयन्त यैषा रौद्री शस्यते, इति ।

तान्वै तानेव पशून्सर्वानभिलक्ष्यैष रुद्र इदं सर्वं ममैवेत्यब्रवीत् । तत्रोपपत्तिं चोक्तवान् । वास्तुहं वास्तौ यज्ञभूमौ हीनं यद्द्रव्यमस्ति तत्सर्वं ममेति श्रुत्यन्तरेऽपि प्रसिद्धम् । तथा च तैत्तिरीया रुद्रवाक्यमामनन्ति—'यद्यज्ञवास्तौ हीयते मम वै तत्' इति । तं रुद्रं सर्वान्पशूनभिगच्छन्तमेतया वक्ष्यमाणयर्चा निरवादयन्त निरपेक्षमकुर्वत । तया तुष्टो रुद्रः पश्वपेक्षां परित्यजति स्म । का सर्गिति सोच्यते । यैषा रौद्री रुद्रदेवताका शस्यते साऽवगन्तव्या ।

तस्या ऋचः पादत्रयं पठति—

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो
युयोथाः । त्वं नो वीरो अर्वति क्षमेथाः, इति ।

मरुतां देवानां पितर्हे रुद्र ते तव सुम्नं सुखमैत्वागच्छतु । नोऽस्मान्सूर्यस्य संदृशः सूर्यावलोकनान्मा युयोथा मा वियोजय । दृष्टियुक्तान्कुर्वित्यर्थः । किंच

---

आ ते पितर्मरुतां०-२-३३-१ ।

हे रुद्र वीरस्त्वं नोऽस्माकमर्वति पश्वादिवस्तुनि क्षमेथाः सहिष्णुर्भव । अस्मदीयान्प[नि प]श्वादिवस्तूनि मा विवासयेत्यर्थः ।

तृतीयपादस्य त्वं नो वीर इत्यत्रत्यः पाठः । अभि नो वीर इति शाखान्तरपाठः । तयोर्मध्ये स्वपाठं विधाय शाखान्तरपाठं निषेधति—

इति ब्रूयान्नाभि न इत्यनभिमानुको
हैष देवः प्रजा भवति, इति ।

इत्यनेन पूर्वोक्तेन प्रकारेण त्वं नो वीर इति पाठमेव शंसनकाले ब्रूयान्नाभि न इति पाठं ब्रूयात् । त्वं नो वीर इति पाठे सत्येष देवः प्रजा अनभिमानुको भवति । अभिमानुकोऽभि न इति पाठान्तरेऽभिशब्दस्य विद्यमानत्वात्पुत्रादिकाः प्रजा अभिलक्ष्य ताः श्रयिष्यामीति रुद्रो मनुते । त्वं न इति पाठे तु न तथेत्यर्थः ।

चतुर्थपादेऽपि स्वाभिमतपाठविधिपूर्वकं पाठान्तरं विधत्ते—

प्रजायेमहि रुद्रिय प्रजाभिरिति ब्रूयान्न
रुद्रेत्येतस्यैव नाम्नः परिहृत्यै, इति ।

हे रुद्रिय रुद्रसंबन्धिभृत्य त्वदनुज्ञया वयं प्रजाभिः प्रजायेमहि पुत्रपौत्रादिरूपेणोत्पद्येमहि । अस्मिन्पादे रुद्रियेत्येतमेव पाठं ब्रूयान्न तु रुद्रेति पाठम् । एतस्यैव रुद्रनाम्न उग्रस्य परिहाराय रुद्रियेति पाठादरः ।

आ ते पितरित्यस्या ऋचः स्थाने कांचिदन्यामृचं विधत्ते—

तदु खलु शं नः करतीत्येव शंसेच्छमिति प्रतिपद्यते सर्वस्मा एव शान्त्यै नृभ्यो नारिभ्यो गव इति पुमांसो वै नरः स्त्रियो नार्यः सर्वस्मा एव शान्त्यै, इति ।

तदु खलु तत्रैव पूर्वामृचं परित्यज्य तस्या एव स्थाने शं नः करत्यर्वत इत्येतामृचं शंसेत् । तथा सति को लाभ इति तदुच्यते । तस्या ऋच आदौ यच्छमित्यनेन पदेन प्रतिपद्यते प्रारम्भः क्रियते तस्य पदस्य शान्तिवाचकत्वात्सर्वस्मै सर्वस्यापि स्वकीयस्य वस्तुनः शान्तिर्भवति । सर्वस्मा इत्यस्य

---

शं नः करत्यर्वते०-१-४३-६ ।

व्याख्यानं नृभ्य इत्यादि । तस्यापि व्याख्यानं पुमास इत्यादि । सर्वस्मा एव शान्त्या इत्युपसंहारः ।

प्रकारान्तरेण तामृचं प्रशंसति—

सोऽनिरुक्ता रौद्री शान्ता सर्वायुः सर्वायुत्वाय, इति ।

सो साऽप्यृगगिरुक्ता रुद्रवाचकपदाभावादस्पष्टदेवताकाऽत एव रौद्री रुद्रदेवताका सत्यपि घोरार्थवाचकरुद्रपदाभावादियं शान्ता । तां शंसेद्धोता सर्वायुर्भवति । तच्च यजमानस्य सर्वायुत्वाय संपद्यते ।

वेदनं प्रशंसाति—

सर्वमायुरेति य एवं वेद, इति ।

पुनरपि प्रकारान्तरेण प्रशंसति—

सो गायत्री ब्रह्म वै गायत्री ब्रह्मणै-
वैनं तं नमस्यति ॥ ३४ ॥ इति ।

सो सा च ऋग्गायत्रीछन्दस्का । गायत्री च ब्रह्म ब्राह्मणजातिरेव । उभयोः प्रजापतिमुखजत्वात् । अतो ब्रह्मणैव ब्राह्मणेनैवैनं रुद्रं नमस्करोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये दशमः खण्डः ॥१०॥ (३४) [१०५] ।

———

अथ वैश्वानराय पृथुपाजसे विप इत्यनेन सूक्तेनाऽऽग्निमारुतशस्त्रस्य प्रारम्भं विधत्ते—

वैश्वानरीयेणाऽऽग्निमारुतं प्रतिपद्यते वैश्वा-
नरो वा एतद्रेतः सिक्तं प्राच्यावयत्तस्माद्वै-
श्वानरीयेणाऽऽग्निमारुतं प्रतिपद्यते, इति ।

रेतसः प्रच्यावनं काठिन्यापादनम् ।

तस्मिन्वैश्वानरीयसूक्ते कंचिद्विशेषं विधत्ते—

अनवानं प्रथम ऋक् शंस्तव्याऽग्नीन्वा एषोऽ-
र्चींष्यशान्तान्प्रसीदन्नेति य आग्निमारुतं
शंसति प्राणेनैव तदग्नींस्तरति, इति ।

---

१ ख. झ. °का तत ।

अवानशब्देनोच्छ्वासनिश्वासावुच्येते। तौ यथा न भवस्तथा प्रथमा, ऋक्शंस्तव्या। एतथा सति सर्वानग्नीन्वै ज्वालारूपानग्नीनेवैष होताऽशान्ता-न्कृत्वा प्रसीदन्प्रसादं कुर्वन्नेति गच्छति। यः पुमानाग्निमारुतशस्त्रं शंसति तस्य प्रसादहेतुत्वं कथमिति तदुच्यते। उच्छ्वासनिश्वासनिरोधादनवानं शंसन्प्रा-णवायुनैव तानग्नींस्तरत्युल्लङ्घयति। अग्निकृतमुपद्रवं शमयतीत्यर्थः।

शंसनकाले प्रामादिकस्य वर्णादिलोपरूपस्यापराधस्य प्रतीकारं दर्शयति—

अधीयन्नुपहन्यादन्यं विवक्तारमिच्छे-

त्तमेव तत्सेतुं कृत्वा तरति; इति।

अधीयन्नधीयानः शंसनं कुर्वन्होता यद्युपहन्यादुपघातं वर्णलोपं कुर्यात्तदा-नीमन्यं कंचित्पुरुषं विवक्तारं विविच्य वक्तुं समर्थमिच्छेत्समीपेऽवस्थापयेत्। तदानीं तमेव पुरुषमपराधतरणोपायं सेतुं कृत्वा तमपराधमुल्लङ्घयति। अयं पक्षोऽनुकल्पः।

मुख्यपक्षं दर्शयति—

तस्मादाग्निमारुते न व्युच्यमेष्टव्यो विवक्ता, इति।

यस्मात्प्रमादं कृत्वा विवक्तृपुरुषसंपादनं न मुख्यं तस्मादाग्निमारुते शस्त्रे न व्युच्यं न पश्चाद्विवक्तव्यं किंतु प्रथममेव विवक्ता विविच्य वक्तुं समर्थो होता, एष्टव्यः प्रयत्नेन संपादनीयः।

अथ प्रत्वक्षसः प्रतवस इत्येतन्मरुद्देवताकं सूक्तं विधत्ते

मारुतं शंसति मरुतो ह वा एतद्रेतः सिक्तं

धून्वन्तः प्राच्यावयंस्तस्मान्मारुतं शंसति, इति।

मरुतां धूननेन प्रजापतिरेतःशोषणं पूर्वमेवोक्तम्।

अथ प्रगाथद्वयं विधत्ते—

यज्ञा यज्ञा वो अग्नये देवो वो द्रवि-

णोदा इति मध्ये योनिं चानुरूपं च

शंसति तद्यन्मध्ये योनिं चानुरूपं च

शंसति तस्मान्मध्ये योनिर्धृता, इति।

---

प्रत्वक्षसः प्रतवसः०—१-८७-१। यज्ञा यज्ञा वो अग्नये०—६-४८-१।

यज्ञायज्ञीय इत्येकः प्रगाथः । देवो व इति द्वितीयः । तत्र प्रथमे प्रगाथे तृचः संपद्यते । सोऽयं स्तोत्रियस्तस्मिंस्तृचे सामगैः स्तूयमानत्वात् । अत एवासौ द्वयोर्मध्ये प्रथमभावित्वाद्योनिरित्युच्यते । द्वितीयप्रगाथे समुत्पन्नस्तृचोऽनुरूपो यादृशः स्तोत्रियस्तादृशत्वमनुरूपत्वम् । तदेतदुभयं शस्त्रमध्ये शंसनीयं न तु शस्त्रान्तरेष्विव स्तोत्रियानुरूपयोरादौ शंसनीयम् । तथा सति यस्मादत्र सूक्तमध्ये योनेरनुरूपस्य च शंसनं तस्माल्लोकेऽपि नारीणां शरीरमध्ये योनिर्धृता ।

शस्त्रमध्ये तयोः स्थानविशेषं दर्शयति—

यदु द्वे सूक्ते शस्त्वा शंसति प्रतिष्ठयोरेव तदुपरिष्टात्प्रजननं दधाति प्रजात्यै, इति ।

यदु यस्मादेव कारणाद्वैश्वानरीयं मारुतं चेति द्वे सूक्ते शस्त्वा पश्चादेतौ स्तोत्रियानुरूपौ शंसति तस्मात्कारणादुद्वित्वसंख्योपेतयोः प्रतिष्ठयोः स्थितिहेत्वोः पादयोरेवोपरिष्टादूर्ध्वदेशे प्रजननं प्रजोत्पादकमिन्द्रियं दधाति । तच्च प्रजात्यै प्रजोत्पादनाय संपद्यते ।

वेदनं प्रशंसति—

प्रजायते प्रजया पशुभिर्य एवं वेद ॥ ३५ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याय एकादशः खण्डः ॥ ११ ॥ (३५)[१०६] ।

---

अथ प्रतव्यसीमित्येतज्जातवेदोदेवताकं सूक्तं विधत्ते—

जातवेदस्यं शंसति, इति ।

तदेतत्प्रशंसति—

प्रजापतिः प्रजा असृजत ताः सृष्टाः पराच्य एवाऽऽयन्न व्यावर्तन्त ता अग्निना पर्यगच्छत्ता अग्निमुपावर्तन्त तमेवाद्याप्युपावृत्ताः सोऽब्रवीज्जाता वै प्रजा अनेनाविदमिति यदब्रवीज्जाता वै प्रजा अनेनाविदमिति तज्जातवे-

---

प्रतव्यसीं नव्यसीं० –१–१४३–१ ।

दस्यमभवत्तज्जातवेदसो जातवेदस्त्वम्, इति ।

पुरा प्रजापतिना सृष्टाः प्रजाः प्रजापतिं पृष्ठतः कृत्वा पराङ्मुखत्वेनैवाऽऽगच्छन्न पुनरावृत्तास्तदानीं प्रजापतिस्ताः प्रजा अग्निना पर्यगच्छत्परितोऽग्निप्राकारं कृतवान् । अतस्ताः प्रजा दूरं गन्तुमशक्ता अग्निमुपेत्य पुनरावर्तन्त । यस्मादेवं तस्मादद्यापि शीतार्ताः प्रजास्तमेवाग्निमुपावृत्ताः परितो गच्छन्त्योऽ-ऽप्यग्निं दृष्ट्वा समीपे कृत्वा सेवितुमावर्तन्ते । ततः संतुष्टः प्रजापतिरेनमब्रवीत् । जाता उत्पन्ना याः प्राजास्ताः सर्वा अहमनेनाग्निनाऽविदं लब्धवानस्मि । ज्ञातवानस्मीति वा । यस्माज्जाता अविदमनेनेत्युक्तवांस्तस्मादग्निसंबन्धि जातवेदस्यं सूक्तमभवत् । जातवेदसोऽग्नि(ग्ने)रपि जातान्वेत्त्यनेनेति व्युत्पत्त्या तन्नाम संपन्नम् ।

आपो हि ष्ठा मयोभुव इत्यादिकं तृचं विधत्ते—

ता अग्निना परिगता निरुद्धाः शोचन्त्यो
दीध्यत्योऽतिष्ठंस्ता अद्भिरभ्यषिञ्चत्तस्मादुप
रिष्टाज्जातवेदस्यस्याऽऽपोहिष्ठीयं शंसति, इति ।

अग्निना परिगताः परितो वेष्टिता निरुद्धा गन्तुमशक्ताः शोचन्त्यः शोकं प्राप्नुवन्त्यो दीध्यत्यो दीप्यमानाः प्रजास्तत्रैवातिष्ठन् । प्रजापतिस्ताः प्रजाः संतापपरिहारायाद्भिरभ्यषिञ्चत् । यस्मादेवं तस्माज्जातवेदस्याख्यस्योपरिष्टादापो हि ष्ठेत्यादिकं तृचं शंसेत् ।

तत्र कंचिद्विशेषं विधत्ते—

तस्माच्छमयतेव शंस्तव्यं ता अद्भिर-
भिषिच्य निजा स्यैवामन्यत, इति ।

यस्मादापोहिष्ठीयं तापशमनकारणं तस्मात्तच्छमयतेव होत्रा शंसनीयम् । यथा वह्निं शमयन्पुरुषः शनैः शनैः क्रमेण जलं सिञ्चति, एवमनेनापि शनैः शंसनं कर्तव्यम् । ततः स प्रजापतिस्ता अद्भिरभिषिच्या निजा एव स्वकीया एव ताः प्रजा इत्यमन्यत । स्याशब्दस्तच्छब्दपर्याय एकवचनान्तोऽपि बहुवचनान्तत्वेन परिणमयितव्यः । तथा सति ताः प्रजा इत्युक्तं भवति । तस्माच्छनैः शंसनेन शस्त्रस्य स्वकीयत्वं संपद्यत इत्यर्थः । यद्वा ता अद्भिरित्याद्यर्थवाद उत्तरशेषत्वेन योजनीयः ।

---

आपो हि ष्ठा मयोभुवः—१०—९—१ ।

उत नोऽहिर्बुध्न्य इत्यस्या ऋचः शंसनं तद्देवतास्तुतिद्वारेणोन्नयति—

तासु वा अहिना बुध्न्येन परोक्षात्तेजोऽदधादेष ह वा अहिर्बुध्न्यो यदग्निर्गार्हपत्योऽग्निनैवाऽऽसु तद्गार्हपत्येन परोक्षात्तेजो दधाति तस्मादाहुर्जुह्वदेवाजुह्वतोऽवसीयानिति ॥ ३६ ॥ इति ।

तास्वभिषेकादूर्ध्वं स्वकीयत्वेन स्वीकृतासु प्रजासु प्रजापतिरहिना बुध्न्येनाहिशब्दबुध्न्यशब्दद्वयनामकाग्निविशेषेण परोक्षात्परोक्षरूपेण तेजोऽदधात् । प्रजानां संतापभीरुत्वात् । ता यथा न पश्यन्ति तथा तास्वग्निविशेषसंबन्धि तेजः स्थापितवान् । यो गार्हपत्योऽग्निरस्ति, एष एवाहिशब्देन बुध्न्यशब्देनाभिहितः । अतस्तदीयाशंसने सति गार्हपत्येनैवाग्निना प्रजासु परोक्षत्वेन तेजः स्थापयति । यस्मादाग्नेयं तेजोऽपेक्षितं तस्मादजुह्वतो होमरहितात्पुरुषाज्जुह्वदेव होमं कुर्वन्नेव पुरुषोऽवसीयानत्यन्तं श्रेष्ठ इत्येवं जना आहुः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये द्वादशः खण्डः ॥१२॥ (३६) [१०७] ।

---

अथ देवानां पत्नीरुशतीरवन्तु न इत्यृग्द्वयं देवपत्नीदेवताकं विधत्ते—

देवानां पत्नीः शंसत्यनूचीरग्निं गृहपतिं तस्मादनूची पत्नी गार्हपत्यमास्ते, इति ।

देवानां पत्नीरित्यनेन देवतावाचकेन शब्देन तत्प्रतिपादकमृग्द्वयं विवक्षितम् । ततश्च देवानां पत्नीर्गृहपतिमग्निमनूचीः शंसेत् । गृहपतिरग्निरित्येताभ्यां शब्दाभ्यां तत्प्रतिपादिकोत नोऽहिर्बुध्न्य इत्यृग्विवक्षिता । तदपेक्षया देवपत्नीनामकस्य मन्त्रजातस्य पश्चाद्भाविस्वमन्वक्त्वम् । अतः पूर्वोक्ताया ऋचः पश्चाच्छंसेदित्यर्थः । यस्मादत्रैवं तस्माद्यज्ञशालायां पत्नी गार्हपत्यमनूच्य पश्चादवतिष्ठत इत्यर्थः ।

अत्र कंचित्पूर्वपक्षमुत्थापयति—

तदाहू राकां पूर्वां शंसेज्जाम्यै वै पूर्वपेयमिति, इति ।

संपूर्णचन्द्रमण्डलयुक्ता पौर्णमासी राका । तदभिमानिदेवतायाः प्रतिपादि-

---

उत नोऽहिर्बुध्न्यः ०-६-५०-१४ । देवानां पत्नीः ०-५-४६-६ ।

कर्गपि राकेत्युच्यते। तां राकां पूर्वां देवपत्नीभ्यः पूर्वभाविनीं शंसेत्। सेयं राका देवानां जामी नाम भगिनी तस्मात्तस्या एव पूर्वपेयं प्रथमतः सोमपानं युक्तमिति पूर्वपक्षः।

तं निराकृत्य देवपत्नीनामेव पूर्वत्वं दर्शयति—

तत्तन्नाऽऽदृत्यं देवानामेव पत्नीः पूर्वाः शंसेदेष ह वा एतत्पत्नीषु रेतो दधाति यदग्निर्गार्हपत्योऽग्निनैवाऽऽसु तद्गार्हपत्येन पत्नीषु प्रत्यक्षाद्रेतो दधाति प्रजात्यै, इति।

राकायाः पूर्वत्वमनादरणीयम्। देवपत्नीनामेव पूर्वत्वं युक्तम्। गार्हपत्योऽग्निः पत्नीष्वेव रेतः स्थापयति न तु भगिन्याम्। तस्मात्पत्नीनां पूर्वशंसनेन प्रत्यक्षमेव पत्नीषु गार्हपत्यमुखेन रेतः स्थापयति। तच्च प्रजात्यै संपद्यते।

वेदनं प्रशंसति—

प्रजयते प्रजया पशुभिर्य एवं वेद, इति।

लौकिकोदाहरणेन पत्नीनां पूर्वभावित्वं भगिन्याः पश्चाद्भावित्वं चोपपादयति—

तस्मात्समानोदर्या स्वसाऽन्योदर्यायै जायाया अनुजीविनी जीवति, इति।

पुरुषाणामेकोदरजाऽपि भगिनी परस्मै दीयते। भिन्नोदरजाऽपि जाया स्वार्थं स्वी क्रियते तथा सति परस्मै दत्ता भगिनी यदा कदाचिद्भ्रातृजायामनुसृत्य तद्दत्तान्नपानाभ्यां जीवन्ती सती जीवति कंचित्कालमवतिष्ठति।

राकामहमित्यृग्द्वयं विधत्ते—

राकां शंसति राका ह वा एतां पुरुषस्य सेवनीं सीव्यति यैषा शिश्नेऽधि, इति।

देवतावाचिराकाशब्देन तदभिधायिन्यृगभिधीयते। तां शंसेत्। पुरुषस्य शिश्नेऽधि शिश्नस्योपरि स्थिता गुदवलयपर्यन्तं व्याप्ता यैषा सेवनी,

---

राकामहं सुहवां०—२-३२-४।

---

1 ग. ङ. च. छ. ज. ट. शिश्न्येऽधि।

एतच्छन्दोपस्थपदाभिधेया शिराऽस्ति तां शिरां राकाख्या देवता सीव्यति दृढबद्धां करोति । तस्मात्तदीयामृचं शंसेत् ।

वेदनं प्रशंसति—

पुमांसोऽस्य पुत्रा जायन्ते य एवं वेद, इति ।

पावीरवी कन्येत्येतामृचं विधत्ते—

पावीरवीं शंसति वाग्वै सरस्वती पावी-
रवी वाच्येव तद्वाचं दधाति, इति ।

येयं वागभिमानिनी सरस्वती देवता सैव पावस्य शोधस्य हेतुत्वात्पावीरवी । तत्पाठेन वाच्येव देवतायां मन्त्ररूपायां वाचं स्थापयति ।

अत्र विचारमवतारयति—

तदाहुर्यामीं पूर्वां शंसे३त्, पित्र्या३मिति, इति ।

इमं यम प्रस्तरमित्येषा यमदेवताकत्वाद्याम्योदीरतामवर इत्येषा पितृदेवताकत्वात्पित्र्या । उभयोः पौर्वापर्यकारणस्यानिश्चयाद्विचारस्तदर्था प्लुतिः ।

तत्र निर्णयं दर्शयति—

यामीमेव पूर्वां शंसेदिमं यम प्रस्त-
रमा हि सीदेति राज्ञो वै पूर्वपेयं
तस्माद्यामीमेव पूर्वां शंसेत्, इति ।

यमो हि राजा । यमः पितृणां राजेति श्रुत्यन्तरात् । राज्ञश्च प्रथमपानं युक्तम् ।

पूर्वोक्तयाम्या अन्यां यामीं विधत्ते—

मातली कव्यैर्यमो अङ्गिरोभिरिति काव्याना-
मनूचीं शंसत्यवरेणैव वै देवान्काव्याः परेणैव
पितॄंस्तस्मात्काव्यानामनूचीं शंसति, इति ।

काव्यैरिति श्रुत्यन्तरादियं काव्यानामृक्सा च पूर्वोक्तामृचमनु पश्चाद्गच्छतीत्यनूची तां तथैव शंसेत् । काव्या देवानां स्तोतारः केचिदधमजाति-

---

पावीरवी कन्या०—६-४९-७ । इमं यम प्रस्तरमा हि०—१०-१४-४ ।
उदीरतामवर०—१०-१५-१ । मातली कव्यैर्यमो०—१०-१४-३ ।

विशेषाः पितृभ्योऽप्युत्तमजातीयाः। तदेव देवानवरेण पितॄन्परेणेत्युच्यते। अत एव पूर्वमुक्ताया याम्या वक्ष्यमाणायाः पित्र्यायाश्च मध्ये तच्छंसनं युक्तम्।

अथ तिस्रः पितृदेवताका ऋचो विधत्ते—

उदीरतामवर उत्परास इति पित्र्याः शंसति, इति।

उदाहृतं पादं द्वितीयपादेन सह व्याख्यातुं द्वितीयपादं पठति—

उन्मध्यमाः पितरः सोम्यास इति, इति।

पादद्वयं व्याचष्टे—

ये चैवावमा ये च परमा ये च मध्य-
मास्तान्सर्वाननन्तरायं प्रीणाति, इति।

अवरे निकृष्टाः पितर उदीरतामुत्कर्षेण गच्छन्तु। परास उत्कृष्टाः पितर उदीरताम्। तथा मध्यमा निकृष्टोत्कृष्टमध्यवर्तिनः पितर उदीरताम्। ते त्रिविधाः पितरः सोम्यासः सोमयोग्या इत्येतस्य पादद्वयस्य पाठेन त्रिविधानपि पितॄननन्तरायं कस्याप्यन्तरायो यथा न भवति तथा तर्पयति।

विहितासु तिसृष्वृक्षु प्रथमाया उदाहृतत्वादनन्तरभाविनीं द्वितीयामृचं दर्शयति—

आहं पितॄन्सुविदत्राँ अवित्सीति द्वितीयां शंसति, इति।

तस्या ऋचस्तृतीयपादमनूद्य व्याचष्टे—

बर्हिषदो ये स्वधया सुतस्येत्येतद्ध वा
एषां प्रियं धाम यद्बर्हिषद इति
प्रियेणैवैनांस्तद्धाम्ना समर्धयति, इति।

बर्हिषि दर्भे सीदन्त्युपविशन्तीति बर्हिषदः पितरः। अत्र बर्हिषद इति यदुच्यत एतद्ध वा एतदेव बर्हिरेषां पितॄणां प्रियं स्थानं तस्मादेतत्पाठेनैनान्पितॄन्प्रियेणैव धाम्ना स्थानेन समृद्धान्करोति।

---

उदीरतामवर०—१०–१५–१। आहं पितॄन्सुविदत्राँ०—१०–१५–३।

---

१ ग. ङ. च. छ. 'वैनंस्त'।

वेदनं प्रशंसति—

प्रियेण धाम्ना समृध्यते य एवं वेद, इति ।

तृतीयामृचं दर्शयति—

इदं पितृभ्यो नमो अस्त्वद्येति नमस्कारवतीमन्ततः शंसति तस्मादन्ततः पितृभ्यो नमस्क्रियते, इति ।

अस्यामृचि नमो अस्त्विति श्रूयमाणत्वादियं नमस्कारवती । तामेतां तिसृणां पित्र्याणामन्ते शंसेत् । यस्मादेवं तस्माच्छ्राद्धस्यान्ते नमो वः पितर इत्यादिना पितृभ्यो नमस्कारः क्रियते ।

एतासु पित्र्यासु कंचिद्विशेषं विचार्य निर्णयं दर्शयति—

तदाहुर्व्याहावं पित्र्याः शंसे३त् । अव्याहावा३मिति । व्याहावमेव शंसेदसंस्थितं वै पितृयज्ञस्य साध्वसंस्थितं वा एष पितृयज्ञं संस्थापयति यो व्याहावं शंसति तस्माद्व्याहावमेव शंस्तव्यम् ॥३७॥ इति ।

शोंसावोमिति मन्त्र आहावः । अनेन मन्त्रेण प्रत्यृचं व्याहावं विशेषेणाऽऽहूयाऽऽहूय किं तिस्रः पित्र्याः शंसेदाहोस्विदव्याहावं पृथक्पृथगाहावमन्त्रं विना शंसेदिति विचारं ब्रह्मवादिन आहुः । अत्र पित्र्याः शंसतीत्येकेनैव विधिना विहितत्वात्पृथक्पृथगाहावो नास्तीति पक्षः प्रतिभाति । पुनरपि द्वितीयां शंसति नमस्कारवतीं शंसतीति पृथग्विधिदर्शनात्प्रत्येकमाहावः कर्तव्य इत्यपि प्रतिभाति । विचारार्थं प्लुतिद्वयम् । तत्र पृथक्पृथगाहाव एव सिद्धान्तः । तत्रेयमुपपत्तिः । पितृयज्ञस्य संबन्धि यदङ्गमसंस्थितमेव वर्ततेऽसमाप्तं तिष्ठति तदङ्गं साधु समाप्तं कर्तव्यम् । यो होता पृथगाहावं कृत्वा शंसति, एष होता पूर्वमसंस्थितमसमाप्तं पितृयज्ञं संस्थापयति । तस्मात्पृथक्पृथगाहावमन्त्रं पठित्वैव शंस्तव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये त्रयोदशः खण्डः ॥१३॥ (३७) [१०८] ।

---

इदं पितृभ्यो नमो०—१०-१५-२ ।

अथ चतस्र ऋचो विधत्ते—

स्वादुष्किलायं मधुमाँ उतायमितीन्द्रस्यैन्द्री-
रनुपानीयाः शंसत्येताभिर्वा इन्द्रस्तृतीयसवन-
मन्वपिबत्तदनुपानीयानामनुपानीयात्वम्, इति।

स्वादुष्किलायमित्यादिका ऋच ऐन्द्यः। इन्द्रदेवताकत्वात्पापिवांसमिन्द्रमितीन्द्रस्तृतीयपादे श्रूयते। ताश्चेन्द्रस्यानुपानीया भोजनादूर्ध्वं यत्पानं तत्पश्चाद्भावित्वादनुपानं तत्स्थानीया एता ऋचः। ताः शंसेत्। कथमिवाऽऽसामनुपानीयात्वमिति तदुच्यते। अयमिन्द्रस्तृतीयसवनमनु पश्चादेताभिर्ऋग्भिः शस्यमानः सन्सोममपिबत्तस्मादनुपानीयेति नाम संपन्नम्।

एतच्छंसनकालेऽध्वर्योः प्रतिगरमन्त्रे विशेषं विधत्ते—

माद्यन्तीव वै तर्हि देवता यदेता होता
शंसति तस्मादेतासु मद्वत्प्रतिगीर्यम्, इति।

तस्मिन्ननुपानीयानामृचां शंसनकाले होतुः शंसनं श्रुत्वा देवताः सर्वा माद्यन्तीव वै सर्वथा हृष्यन्त्येव। तस्मात्कारणादेतास्वृक्षु शस्यमानास्वध्वर्युणा मद्वत्प्रतिगीर्यं मदिधातुयुक्तं प्रतिगरणं पठनीयम्। मदामो दैवेत्ययं मदिधातुयुक्तः प्रतिगरणमन्त्रः।

ऋगन्तरं विधत्ते—

ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणी-
मृचं शंसति विष्णुर्वै यज्ञस्य दुरिष्टं पाति
वरुणः स्विष्टं तयोरुभयोरेव शान्त्यै, इति।

विष्णुर्वरुणश्च मिलित्वा देवता यस्या ऋचः सा वैष्णुवारुणी। तां जपेच्छंसेदित्यर्थः। तस्याश्चतुर्थपादे विष्णुरगन्वरुणेति श्रवणाद्वैष्णुवारुणीत्वम्। सा चाऽऽश्वलायनेन पठिता। दुरिष्टमङ्गविकलं यदनुष्ठितं तद्विष्णुः पाति। वैकल्यं निवारयतीत्यर्थः। स्विष्टं साकल्येन यदङ्गमनुष्ठितं तद्वरुणः पाति तस्य फलप्रतिबन्धं निवारयतीत्यर्थः। तस्मादियमृक्तयोरुभयोर्विष्णुवरुणयोरेव शान्त्यै प्रीत्यै संपद्यते।

विष्णोर्नु कं वीर्याणि प्रवोचमिति वैष्णवीं

---

स्वादुष्किलायं मधुमाँ०—६—४७—१। विष्णोर्नु कं वीर्याणि०—१—१५४—१।

शंसति यथा वै मत्यमेवं यज्ञस्य विष्णुस्त-
यथा दुष्कृष्टं दुर्मतीकृतं सुकृष्टं सुमतीकृतं
कुर्वन्नियादेवमेवैतद्यज्ञस्य दुष्टुतं दुःशस्तं सुष्टुतं
सुशस्तं कुर्वन्नेति यदेतां होता शंसति, इति ।

विष्णोरिति श्रूयमाणत्वादियं वैष्णवी । मतौ बुद्धौ सम्यक्त्वेन प्रतिभातं कार्यं मत्यम् । अयं दृष्टान्तः । विष्णुर्दार्ष्टान्तिकः । यथा मत्यं कार्यं लोके फल-पर्यवसायि भवति तथा विष्णुरपि फलपर्यवसायीत्यर्थः । उक्तयोर्दृष्टान्तदार्ष्टा-न्तिकयोस्तात्पर्यं तद्यथेत्यादिना प्रपञ्च्यते । यथा लोके दुष्कृष्टं कर्षकैः सस्य-स्थाने दोपयुक्तं यथा भवति तथा कर्षणं कृतम् । यत्किंचिद्राजकार्यममात्यैर्दु-र्मतीकृतं दुष्टं मतमन्यथा चिन्तितम् । पूर्वं तत्कार्यमदुर्मतं सत्पश्चाद्दुर्बुद्धिप्रमादाद्दु-र्मतं संपादितम् । तत्र कश्चिद्बुद्धिमान्कर्षकः कृष्टस्थाने दुष्टस्य तृणादेरपनयनेन सुकृष्टं कुर्वन्नियात्कर्षकस्य पृष्ठतो गच्छेत् । राजकार्यमपि दुर्बुद्धिनाऽमात्येन दुर्मतीकृतं कश्चित्सुबुद्धिरमात्यः सुमती कुर्वन्गच्छेत् । यथैतदुभयं लोक एवमे-वास्मिन्कर्मणि यज्ञसंबन्धि यत्स्तोत्रमकुशलैरुद्गातृभिर्दोषसहितं कृतं यदपि होतृभिः शस्त्रं दोषसहितं पठितं तदुभयमपि विष्णुः क्रमेण सुष्टुतं सुशस्तं कुर्व-न्नेति गच्छति । तत्रत्यदोषं परिहरतीत्यर्थः । यद्यदा वैष्णवीमेतां होता शंसति तदा तदुभयसमाधानमिति द्रष्टव्यम् ।

ऋगन्तरं विधत्ते—

तन्तुं तन्वन्रजसो भानुमन्विहीति
प्राजापत्यां शंसति प्रजा वै तन्तुः
प्रजामेवास्मा एतत्संतनोति, इति ।

अस्यामृचि काचिदपि देवता साक्षाद्वाचकशब्देन नोक्ता तस्मादियमनि-रुक्ता । तादृश्याश्च प्रजापतिर्देवता । तद्देवताकत्वं पूर्वमेव निरूपितम् । तामेतां प्राजापत्यां शंसेत् । हे प्रजापते तन्तुं तन्वन्पुत्रपौत्रादिसंततिं विस्तारयन्रजसो रजआत्मकस्य जगतो भानुं भासकमादित्यमन्विह्यनुरुध्य गच्छ । आदित्यो हि पुनः पुनः संचरन्नहोरात्रनिष्पत्तिं करोति । तत्कालानुसारेणैव त्वमपि संतान-वृद्धिं कुर्वित्यर्थः । अस्मिन्पादे तन्तुशब्देन पुत्रपौत्रादिप्रजा विवक्षिता तन्तु-

---

तन्तुं तन्वन्रजसो०—१०-५३-६ ।

वद्विस्तार्यमाणत्वात् । तस्मादेतत्पाठेनास्मै यजमानाय प्रजामेव संतनोति, अविच्छिन्नां करोति ।

द्वितीयपादमनूद्य व्याचष्टे—

ज्योतिष्मतः पथो रक्ष धिया कृता-
निति देवयाना वै ज्योतिष्मन्तः
पन्थानस्तानेवास्मा एतद्वितनोति, इति ।

हे प्रजापते धिया कृतान्यागाद्यनुष्ठानबुद्ध्या संपादिताञ्ज्योमिष्मतः प्रकाशयुक्तान्पथः स्वर्गमार्गान्रक्ष विघ्नपरिहारेण पालय । अत्र ज्योतिष्मत्पथिशब्दाभ्यां देवगमनमार्गा विवक्षिताः । देवा येषु मार्गेषु यान्ति ते देवयानाः । सर्वेषां देवानां तेजस्वित्वात्तन्मार्गेषु न कदाऽप्यन्धकारोऽस्ति । तस्मादेतत्पादपाठेनास्मै यजमानाय तानेव मार्गान्होता विस्तारयति ।

उत्तरार्धमनूद्य व्याचष्टे—

अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं
जनमित्येवैनं तन्मनोः प्रजया संतनोति प्रजात्यै, इति,

पुनः पुनः कर्मसु गच्छन्ति प्रवर्तन्त इत्यनुष्ठानशीला जोगुशब्देनोच्यन्ते । तादृशानां जोगुवामस्मत्संततावुत्पन्नानां पुत्रादीनामपोऽनुष्ठीयमानमेतत्कर्मानुल्बणमनतिरिक्तं वयत हे प्रजापते वय निर्वह । बहुवचनं पूजार्थम् । मनुर्भव त्वमपि मनुष्योत्पादनार्थमनुरूपो भव । ततो दैव्यं देवताराधनयोग्यं जनं पुत्रादिरूपं मनुष्यं जनयोत्पादय । तत्तेनार्धपाठेनैनं यजमानं मनोः संबन्धिन्या प्रजया मनुष्यरूपया संतनोति संयोजयति । तच्च प्रजात्यै यजमानस्य प्रजोत्पादनाय संपद्यते ।

वेदनं प्रशंसति—

प्रजायते प्रजया पशुभिर्य एवं वेद, इति ।

ऋगन्तरेण शस्त्रसमाप्तिं विधत्ते—

एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परि-
दधातीयं वा इन्द्रो मघवा विरप्शी, इति ।

---

एवा न इन्द्रो०—४–१७–२० ।

योऽयमिन्द्रोऽस्ति सोऽयं न एवास्मदर्थमेव करत्करोत्विति द्वितीयपादे वक्ष्यमाणेन संबन्धः । कीदृश इन्द्रः । मघवा धनवान् । तथा विरप्शी । रभ राभस्य इत्यस्माद्धातोरुत्पन्नोऽयं शब्दः । विशेषेण राभस्यवान्सर्वदोद्युक्त इत्यर्थः । अनयर्चोत्तमया शस्त्रापेक्षयाऽन्तिमया परिधानं कुर्यात् । उदाहृते प्रथमपाद इन्द्रादिशब्दैः सर्वैरपीयं वै भूमिरेवोपलक्ष्यते । अनया भूमिस्पर्शस्य विधास्यमानत्वात् ।

द्वितीयपादमनूद्य व्याचष्टे—

**करत्सत्या चर्षणीधृदनर्वेतीयं सत्या चर्षणीधृदनर्वा, इति ।**

चर्षणीशब्दो मनुष्यवाची । तान्धारयति पोषयति चर्षणीधृदिन्द्रः । सोऽयमनर्वा हयं परित्यज्य यागभूमावुपविष्टत्वादश्वरहितस्तादृशः सन्सत्या फलप्रदानस्याऽऽवश्यकत्वेन सत्यानि कर्माणि करत्करोतु विघ्नपरिहारेण संपादयतु । अस्मिन्नपि पादे सत्यादिपदैः पूर्ववदियं भूमिरेवोपलक्षणीया ।

तृतीयपादमनूद्य व्याचष्टे—

**त्वं राजा जनुषां धेह्यस्मे इतीयं वै राजा जनुषाम्, इति ।**

जनुषां जातानामस्मे अस्माकमृत्विजां हे इन्द्र त्वं राजा भूत्वा धेहि वक्ष्यमाणमभीष्टं संपादय । अस्मिन्नपि पादे राजा जनुषामिति पदद्वयेन पूर्ववदियं भूमिरेवोपलक्षणीया ।

चतुर्थपादमनूद्य व्याचष्टे—

**अधि श्रवो माहिनं यज्जरित्र इतीयं**
**वै माहिनं यज्ञश्रवो यजमानो जरिता**
**यजमानायैवैतामाशिषमाशास्ते, इति ।**

जरित्रे स्तोत्रे यजमानाय यत्प्रसिद्धं माहिनं महत्त्वं श्रवः कीर्तिं चाधिधेहीति पूर्वेणान्वयः । हे इन्द्राऽऽधिक्येन संपादयेत्यर्थः । अस्मिन्नपि पादे माहिनमित्यनेनेयं भूमिरेवोपलक्षणीया । यच्छब्दो नपुंसकलिङ्गो य इति पुंलिङ्गत्वेन विपरिणमयितव्यः । तेन यो यज्ञ इति प्रसिद्धं यज्ञमाचष्टे । सोऽपीयं भूमिरेव । कीर्तिवाचिना श्रवःशब्देनापि भूमिरेवोपलक्षणीया । यजमानो

जरितृशब्देनाभिधेयः। एतत्पादचतुष्टयपाठेन होता यजमानार्थमेवाऽऽशासनीयं सर्वं प्रार्थयते।

परिधानकाले होतुर्भूमिस्पर्शनं विधत्ते—

तदुपस्पृशन्भूमिं परिदध्यात्तयस्यामेव यज्ञं संभरति तस्यामेवैनं तदन्ततः प्रतिष्ठापयति, इति।

तत्तदा शस्त्रसमाप्तिकाले भूमिं स्पृशन्नेव समापयेत्। तत्तेन स्पर्शेन यस्यामेव भूमौ यज्ञमनुष्ठातुं साधनं संभरति संपादयति तस्यामेव भूमावेनं यज्ञं तदन्ततस्तत्समाप्तिपर्यन्तं प्रतिष्ठापयति।

अथ शस्त्रयाज्यां विधत्ते—

अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्याग्निमारुतमुक्थं शस्त्वाऽऽग्निमारुत्या यजति यथाभागं तद्देवताः प्रीणाति प्रीणाति ॥ ३८ ॥ इति।

अग्निर्मरुतश्च यस्योक्थस्य शस्त्रस्य देवता तदाग्निमारुतमुक्थं पूर्वोक्तप्रकारेण शस्त्वा तत ऊर्ध्वमग्ने मरुद्भिरित्येतया मारुत्या यजेत्। आग्निमारुतयाज्यां पठेदित्यर्थः। तथा सति तस्मिञ्शस्त्रे प्रतिपादिता यावत्यो देवताः सन्ति ताः सर्वास्तत्तद्भागमनतिक्रम्य तर्पयति। अभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोदशाध्याये चतुर्दशः खण्डः॥ १४ ॥ (३८) [१०९]।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये त्रयोदशोऽध्यायः॥ १३ ॥

---

अथ चतुर्दशोऽध्यायः।

---

त्रयोदशे सोमक्रथा प्रकीर्तिता
राजक्रयार्था सवनान्विताऽपि च।
स्याद्वैश्वदेवं च मरुत्वतीयं
तत्ताद्विशेषा उदिताः क्रमेण॥

---

अग्ने मरुद्भिः शुभ०—५-६१-८।

अथ चतुर्दशाध्याये पूर्वोक्तोऽग्निष्टोमः सर्वयज्ञक्रतूनां प्रकृतित्वेन स्तूयते । तदर्थमुपाख्यानमाह—

देवा वा असुरैर्युद्धमुपप्रायन्विजयाय तानग्नि-
र्नान्वकामयतैतुं तं देवा अब्रुवन्नपि त्वमेह्य-
स्माकं वै त्वमेकोऽसीति स नास्तुतोऽन्वेष्या-
मीत्यब्रवीत्स्तुत नु मेति तथेति तं ते समु-
त्क्रम्योपनिवृत्त्यास्तुवंस्तांस्तुतोऽनु प्रैत्, इति ।

यदा देवा विजयार्थमसुरैः सह युद्धमुपक्रान्तवन्तस्तदानीमग्निस्तान्देवाननु पश्चादेतुमागन्तुं नाकामयत । अग्निमिच्छारहितं देवा एवमब्रुवन् । हेऽग्ने त्वमप्येह्यागच्छास्माकमेव मध्ये त्वमेकोऽसि न त्वत्तोऽन्य इति । ततः सोऽग्निरेवमब्रवीद्युष्माभिरस्तुतः सन्नहं नान्वेष्यामि युष्माकं पृष्ठतो न गमिष्यामि तस्मान्नु क्षिप्रमेव मा स्तुत स्तोत्रं कुरुतेति । देवास्तथेत्यङ्गीकृत्य समुत्क्रम्योत्थायोपनिवृत्त्याग्नेरभिमुखत्वेन निवृत्तिं कृत्वा तमग्निमस्तुवन् । सोऽप्यग्निः स्तुतः संस्तान्देवाननुसृत्य प्रैद्युद्धार्थं प्रकर्षेणागच्छत् ।

अग्नेर्युद्धप्रकारं दर्शयति—

स त्रिश्रेणिर्भूत्वा त्र्यनीकोऽसुरान्युद्धमुपप्रायद्विज-
याय त्रिश्रेणिरिति च्छन्दांस्येव श्रेणीरकुरुत
त्र्यनीक इति सवनान्येवानीकानि तानसंभाव्यं
पराभावयत्ततो वै देवा अभवन्पराऽसुराः, इति ।

सोऽग्निर्विजयाय त्रिश्रेणिः सोमपानपङ्क्तित्रययुक्तस्त्र्यनीकस्त्रिभिरनीकैः सेनापतिरूपैः सेनामुख्यैर्युक्तोऽसुरान्प्रति युद्धमुपप्रायत्तत्समीपं प्रकर्षेण गतवान् । त्रिश्रेणिरिति यदुक्तं तत्र गायत्रीत्रिष्टुब्जगतीरूपाणि च्छन्दांस्येव तिस्रः श्रेणीरकुरुत । त्र्यनीक इति यदुक्तं तत्र प्रातःसवनमाध्यंदिन[सवन]तृतीयसवनान्येव त्रीण्यनीकानि सेनामुखान्यकुरुत । ततस्तानसुरान्पुनः शत्रुशेषो यथा न संभाव्यते तथा पराभावयंत्पराभूतानकरोत् । ततो युद्धाद्देवा विजयिनोऽभवन्नसुराः पराभूताः ।

---

१ ट. °वा इदम° ।

वेदनं प्रशंसति—

भवत्यात्मना पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद, इति ।

एवमग्निश्छन्दस्त्रयसवनत्रययुक्तोऽग्निष्टोमरूपोऽभवदित्येकेन प्रकारेणाग्निष्टोमं स्तुत्वा पुनरपि प्रकारान्तरेण स्तौति—

सा वा एषा गायत्र्येव यदग्निष्टोमश्चतुर्विंशत्यक्षरा वै गायत्री चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि, इति ।

योऽयं पूर्वोक्तोऽग्निष्टोमोऽस्ति सा वा एषा गायत्र्येव । अग्निष्टोमगायत्र्योः संख्यासाम्यात् । गायत्रीगतेष्वक्षरेषु या संख्या सैवाग्निष्टोमगतेषु स्तोत्रशस्त्रेषु । तथा हि—बहिष्पवमानो माध्यंदिनपवमान आर्भवपवमान इति त्रीणि पवमानस्तोत्राणि चत्वार्याज्यस्तोत्राणि चत्वारि पृष्ठस्तोत्राण्येकं यज्ञायज्ञीयं स्तोत्रमेवमेतानि द्वादश संपन्नानि । शस्त्राण्यपि तावन्त्येव । आज्यप्रउगे निष्केवल्यमरुत्वतीये वैश्वदेवाग्निमारुते इति होतुः शस्त्राणि षट् । तथा होत्रकाणामपि षट् । एवं स्तोत्रशस्त्रसंख्ययाऽग्निष्टोमस्य गायत्रीरूपत्वम् ।

प्रकारान्तरेण गायत्रीसाम्यं संपाद्य प्रशंसति—

तद्ध यदिदमाहुः सुधायां ह वै वाजी सुहितो दधातीति गायत्री वै तन्न ह वै गायत्री क्षमा रमत ऊर्ध्वा ह वा एषा यजमानमादाय स्वरेतीत्यग्निष्टोमो वै तन्न ह वा अग्निष्टोमः क्षमा रमत ऊर्ध्वो ह वा एष यजमानमादाय स्वरेति, इति ।

तद्ध तत्रैव यज्ञसभायां वेदवादिनो यदिदं वचनमाहुः । किं वचनमिति तदुच्यते । सुष्ठु धीयन्ते सुकृतिनोऽस्यां दिवि सा द्यौः सुधा । तस्यामेव वाजी वाजोऽन्नं सोमरूपं यस्मिन्नस्तीत्यग्निष्टोम उच्यते । स च सुहितः साद्गुण्येनानुष्ठितो दधाति सुधाशब्दवाच्यायां दिवि यजमानं स्थापयतीति यद्वेदवादिनां वचनं तद्गायत्री वै । गायत्रीसाम्यमभिप्रेत्यैवोक्तमित्यर्थः । न ह वा इत्यादिना तदेव स्पष्टी क्रियते । क्षमेति सप्तम्यर्थो विवक्षितः । क्षमायां भूमौ गायत्र्याख्या देवता न ह वै रमते नैव क्रीडति किंत्वेषा गायत्री, ऊर्ध्वा ह वा ऊर्ध्वगामिन्येव भूत्वाऽनुष्ठितवन्तं यजमानमादाय स्वरेति स्वर्गं प्राप्नोति ।

एवंप्रकारेण येयं गायत्री वर्णिता तद्गायत्रीरूपोऽग्निष्टोम एव। तयोः समत्वात्। अग्निष्टोमोऽपि क्षमायां न रमते किंत्वनुष्ठित ऊर्ध्वगामी सन्नेष यजमानमादाय स्वर्गमाप्नोति ।

इत्थं गायत्रीसाम्येन स्तुत्वा संवत्सरसाम्येन स्तौति—

**स वा एष संवत्सर एव यदग्निष्टोमश्चतुर्विंशत्यर्धमासो वै संवत्सरश्चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि,** इति ।

योऽयमग्निष्टोमः स एष संवत्सर एव । अर्धमाससंख्यायाः स्तोत्रशस्त्रसंख्यायाश्च समानत्वात् ।

समुद्रसाम्येन प्रशंसति—

**तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपियन्ति॥ ३९॥** इति ।

स्रोत्याः प्रवाहरूपा नद्यो लोके यथा समुद्रं प्राप्नुवन्ति तथैवोक्थ्यषोडश्यतिरात्राहीनसत्ररूपाः सर्वे क्रतवो विकृतिरूपाः प्रकृतिरूपं तमग्निष्टोममपियन्ति प्राप्नुवन्ति । अग्निष्टोमात्प्राचीना इष्टिपशुबन्धादयोऽपि तमग्निष्टोमं प्राप्नुवन्ति । तथा सति सर्वशब्दो मुख्यार्थः संपद्यते न तु संकोचः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्दशाध्याये प्रथमः खण्डः ॥ १ ॥ (३९) [११०] ।

---

अग्निष्टोमादपि प्राचीनानां यज्ञानामग्निष्टोमप्राप्तिं दर्शयति—

**दीक्षणीयेष्टिस्तायते तामेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोममपियन्ति,** इति ।

अग्निष्टोमस्य प्रारम्भे येयं दीक्षणीयेष्टिस्तायते विस्तार्यते तामनु तत्सादृश्येन वेदोक्ताः सर्वा अपीष्टयोऽग्निष्टोमं प्राप्नुवन्ति । अत्र विकृतिरूपा एवेष्टयो विवक्षिताः । प्रकृतिरूपयोर्दर्शपूर्णमासयोर्वक्ष्यमाणत्वात् ।

दीक्षणीयेष्टिगतचोदकप्राप्तेडोपाह्वानसादृश्येन पाकयज्ञानामग्निष्टोमप्राप्तिं दर्शयति—

**इळामुपह्वयत इळाविधा वै पाकयज्ञा इळामेवानु ये के च पाकयज्ञास्ते सर्वेऽग्निष्टोममपियन्ति,** इति ।

पाकयज्ञाश्च सप्तसंख्याकाः। हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यव-रोहणमष्टकाहोम इति। सोऽयं सूत्रान्तरकारस्य पक्षः। आश्वलायनस्तु हुतादींस्त्रीनेव पाकयज्ञानाह। ते च पाकयज्ञा इळाविधा इडासदृशाः। इळा खलु वै षा पाकयज्ञ इति श्रुत्यन्तरात्। ततो दीक्षणीयेष्टाविडोपाह्वानेन तत्सदृशाः पाकयज्ञाः सर्वेऽप्यग्निष्टोमं प्राप्नुवन्ति।

अग्निहोत्रस्य तत्प्राप्तिं दर्शयति—

सायंप्रातरग्निहोत्रं जुह्वति सायंप्रातर्व्रतं प्रयच्छन्ति स्वाहाकारेणाग्निहोत्रं जुह्वति स्वाहाकारेण व्रतं प्रयच्छन्ति स्वाहाका-रमेवान्वग्निहोत्रमग्निष्टोममप्येति, इति।

यथा प्रतिदिनं कालद्वयेऽग्निहोत्रहोमस्तथा दीक्षितस्य कालद्वये क्षीरपान-रूपं व्रतप्रदानम्। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति यथा स्वाहाकारेणाग्निहोत्र-होमस्तथा ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेति स्वाहाकारेण दीक्षितो व्रतप्रदानमाचरति। अतो व्रतगतस्वाहाकारमेवानुसृत्याग्निहोत्रस्याग्नि-ष्टोमप्राप्तिः।

अग्निष्टोमगतप्रायणीयेष्टिसादृश्येन दर्शपूर्णमासयोरग्निष्टोमप्राप्तिं दर्शयति—

पञ्चदश प्रायणीये सामिधेनीरन्वाह पञ्च-दश दर्शपूर्णमासयोः प्रायणीयमेवानु दर्शपूर्णमासावग्निष्टोममपीतः, इति।

प्रायणीयकर्मणि धाय्यारहितत्वात्सामिधेन्यश्चोदकप्राप्ताः पञ्चदशैव। तथा प्रकृतिभूतयोर्दर्शपूर्णमासयोरपि।

अग्निष्टोमगतसोमद्वारा लौकिकानामपि सर्वेषामौषधानामग्निष्टोमप्राप्तिं दर्श-यति—

सोमं राजानं क्रीणन्त्यौषधो वै सोमो राजौ-षधिभिस्तं भिषज्यन्ति यं भिषज्यन्ति सोम-मेव राजानं क्रीयमाणमनु यानि कानि च भेषजानि तानि सर्वाण्यग्निष्टोममपियन्ति, इति।

लोके यं व्याधिग्रस्तं चिकित्सका भिषज्यन्ति चिकित्सन्ते तं पुरुषमोषधिभिरमृतवल्ल्यादिभिश्चिकित्सन्ते । सोमस्याप्यौषधत्वात्तमनु सर्वाण्यप्यौषधान्यग्निष्टोमं प्राप्नुवन्ति ।

अग्निष्टोमगतातिथ्यकर्मद्वारा चातुर्मास्ययागानां तत्प्राप्तिं दर्शयति—

अग्निमातिथ्ये मन्थन्त्यग्निं चातुर्मास्येष्वातिथ्यमेवानु चातुर्मास्यान्यग्निष्टोममपियन्ति, इति ।

प्रवर्ग्यसाम्येन दाक्षायणयज्ञस्याग्निष्टोमप्राप्तिं दर्शयति—

पयसा प्रवर्ग्ये चरन्ति पयसा दाक्षायणयज्ञे प्रवर्ग्यमेवानु दाक्षायणयज्ञोऽग्निष्टोममप्येति, इति ।

दर्शपूर्णमासयोरेव गुणविकृतिरूपः कश्चिद्दाक्षायणाख्यो यज्ञः । तथा च शाखान्तरे दर्शपूर्णमाससंनिधौ श्रूयते—'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इति । तस्य च प्रवर्ग्यस्य च क्षीरद्रव्येण साम्यम् ।

पशुबन्धानामग्निष्टोमप्राप्तिं दर्शयति—

पशुरुपवसथे भवति तमेवानु ये के च पशुबन्धास्ते सर्वेऽग्निष्टोममपियन्ति, इति ।

सुत्यादिवसात्पूर्वो दिवस उपवसथाख्यस्तस्मिन्नग्नीषोमीयपशुरनुष्ठीयते । तद्विकृतिरूपा वेदोक्ताः सर्वे पशुबन्धाः ।

यज्ञान्तरस्याग्निष्टोमप्राप्तिं दर्शयति—

इळादधो नाम यज्ञक्रतुस्तं दध्ना चरन्ति दध्ना दधिघर्मे दधिघर्ममेवान्विळादधोऽग्निष्टोममप्येति ॥ ४० ॥ इति ।

दर्शपूर्णमासविकृतिरूप एव कश्चिदिळादधनामको यज्ञोऽस्ति, अत एवाऽऽपस्तम्बो दर्शपूर्णमाससंनिधावेवमाह—एतेनेळादधः सार्वसंनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च व्याख्याता इति । दधिघर्मनामकस्त्वग्निष्टोमगतस्तयोरुभयोर्दधिद्रव्येण साम्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्दशाध्याये द्वितीयः खण्डः ॥ २ ॥ (४०) [१११] ।

---

१ क. 'यः सर्वासंनिय' ।

क्रत्वन्तराणामग्निष्टोमप्राप्तिं दर्शयति—

इति नु पुरस्तादथोपरिष्टात्पञ्चदशोक्थ्यस्य स्तोत्राणि पञ्चदश शस्त्राणि स मासो मासधा संवत्सरो विहितः संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सरमेवानूक्थ्योऽग्निष्टोममप्येत्युक्थ्यमपि यन्तमनु वाजपेयोऽप्येत्यत्युक्थ्यो हि स भवति, इति।

इति नु पूर्वखण्डोक्तप्रकारेणैव पुरस्तादग्निष्टोमात्प्राचीनस्य कर्मजातस्याग्निष्टोमप्रवेश उक्त इति शेषः। अथानन्तरमुपरिष्टादितरेषां क्रतूनां तत्प्रवेश उच्यते। तत्र योऽयमुक्थ्यः क्रतुस्तस्य पञ्चदशसंख्याकानि स्तोत्राण्यग्निष्टोमविकृतित्वात्। तदीयानि द्वादश स्तोत्राण्यतिदिश्यन्ते। तत ऊर्ध्वं त्रीण्युक्थसंज्ञकानि स्तोत्राणि। एवं पञ्चदश संपद्यन्ते। शस्त्रेष्वप्ययं न्यायो योज्यः। तानि शस्त्राणि स्तोत्राणि च मिलित्वा मासगतां रात्रिसंख्यां प्राप्नुवन्त्यतः सोऽयं स्तोत्रशस्त्रसमूहो मासः संपद्यते। मासधा मासप्रकारेण मासावृत्त्या संवत्सरो विहितः संपादितो भवति। स च संवत्सरो वैश्वानराग्निरूपः। गर्भप्रविष्टस्य पुरुषस्य संवत्सरमात्रेण वैश्वानराख्यस्योदर्याग्नेः पाटवसंभवात्। अग्निश्चाग्निष्टोमस्वरूपः पूर्वोक्तया रीत्या श्रेणित्रयरूपेणानीकत्रयरूपेण चाग्नेरेवाग्निष्टोमरूपेणाऽऽविर्भूतत्वात्। एवं सति स उक्थ्याख्यक्रतुः स्तोत्रशस्त्रादिपरम्परया संवत्सरमेवानुप्रविश्य तद्द्वाराऽग्निष्टोमं प्रविशति। तं विशन्तमुक्थ्यमनु वाजपेयाख्योऽपि क्रतुरग्निष्टोममप्येति प्राप्नोति। स हि वाजपेयोऽत्युक्थ्यो भवति। उक्थ्याख्यं क्रतुमतिक्रम्य वर्तमानत्वात्। उक्थे यानि पञ्चदश स्तोत्राणि तत ऊर्ध्वं वाजपेये स्तोत्रद्वयं सोऽयमुक्थ्यातिक्रमस्तस्मादुक्थ्यद्वारा वाजपेयस्य तत्प्राप्तिः।

अथातिरात्राप्तोर्यामयोः क्रत्वोरग्निष्टोमप्रवेशं दर्शयति—

द्वादश रात्रेः पर्यायाः सर्वे पञ्चदशास्ते द्वौ द्वौ संपद्य त्रिंशदेकविंशं षोळशिसाम त्रिवृत्संधिः सा त्रिंशत्स मासस्त्रिंशन्मासस्य रात्रयो मासधा संवत्सरो विहितः संवत्सरोऽग्निर्वैश्वानरोऽग्नि-

ग्निष्टोमः संवत्सरमेवान्वतिरात्रोऽग्निष्टोममभ्येत्यति-
रात्रमपि यन्तमन्वप्तोर्यामोऽभ्येत्यत्यतिरात्रो हि स
भवति, इति ।

अतिरात्रयागे द्वादशसंख्याका रात्रेः पर्यायाः । ते चाऽऽपस्तम्बेनैव स्पष्टी-कृताः । अतिरात्रमेव षोडशिनममी मुनयस्तत्र त्रयोदशभ्यश्चमसगणेभ्यो राजानमभिरेचयति । षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति । होतृचसमसमुख्यः प्रथमो गणो मैत्रावरुणचमसमुख्यो द्वितीयो ब्राह्मणाच्छंसिचमसमुख्यस्तृतीयोऽच्छावाकचमसमुख्यश्चतुर्थः । प्रथमाभ्यां गणाभ्यामध्वर्युश्चरत्युत्तराभ्यां प्रतिप्रस्थातैष प्रथमः पर्याय एवं विहितो द्वितीयस्तृतीयश्चेति । अस्यायमर्थः । अतिरात्राख्यं क्रतुं यदाऽनुतिष्ठति तदानीं चोदकप्राप्तं सर्वमनुष्ठायानन्तरं सायंकाले षोडशिग्रहसंबन्धिनश्चमसानपूरयित्वा तत ऊर्ध्वं त्रयोदशचमसगणपर्याप्तं सोममवस्थाप्य षोडशिग्रहप्रचारं कृत्वा तत ऊर्ध्वं रात्रिपर्यायैः प्रचरेत् । तेषु पर्यायेषु च होतृचमसमादिं कृत्वा यश्चमसगणः प्रवर्तते सोऽयं प्रथमः । मैत्रावरुणचमसस्याऽऽदित्वे द्वितीयश्चमसगणो भवति । ब्राह्मणाच्छंसिचमसस्याऽऽदित्वे तृतीयश्चमसगणो भवति । अच्छावाकचमसस्याऽऽदित्वे चतुर्थश्चमसगणो भवति । तेषु चतुर्षु गणेषु प्रथमद्वितीयाभ्यां गणाभ्यामध्वर्युरनुतिष्ठेत् । तृतीयचतुर्थाभ्यां तु प्रतिप्रस्थाताऽनुतिष्ठेत् । एवं गणचतुष्टयानुष्ठानमेकः पर्यायो भवति । पुनरपि द्वितीयतृतीयपर्यायौ तथैवानुष्ठेयौ । तेषु पर्यायेषु द्वादश गणाः संपद्यन्ते । एतत्सर्वमभिप्रेत्य द्वादश रात्रेः पर्याया इत्युक्तम् । ते सर्वेऽपि पञ्चदशास्तदीयस्तोत्रेषु तृचगतानामृचामावृत्तिविशेषेण पञ्चदशस्तोमस्य सामगैः संपादितत्वात्पञ्चदशस्तोमयुक्ताः । द्वादशपर्याया ये सन्ति तेषु द्वौ द्वौ पर्यायौ संपद्य मिलित्वा पञ्चदशसंख्याया द्विरावृत्त्या त्रिंशत्संख्यायां ते सर्वे पर्यवस्यन्ति । किंच षोडशस्तोत्रे यत्सामास्ति तदेकविंशं भवति । तदीयतृचगतानामृचामावृत्त्या सामगैरेकविंशतिस्तोमसंपादनात् । योऽयमतिरात्रस्तस्यान्ते संधिरेतन्नामकं स्तोत्रं तत्र त्रिवृत्स्तोमः सामगैः पठ्यते । तस्य च स्तोमस्य त्रिषु तृचेष्वावृत्तिराहितेषु निष्पन्नत्वादृचां नवसंख्या संपद्यते । एकविंशतिसंख्या नवसंख्या च मिलित्वा त्रिंशत्संख्या भवति । अनया त्रिंशत्संख्यया वा पूर्वोक्तत्रिंशत्संख्यया वा मासरात्रिसाम्यान्मासः संपद्यते । मासश्चेत्यादि पूर्ववद्योजनीयम् । एवं सति वत्सरद्वाराऽतिरात्रोऽग्निष्टोमं प्रविशति । प्रविशन्तमतिरात्रमनु तद्द्वारेणाप्तोर्यामोऽपि प्रविशति । स

ह्यतिरात्रमतिलङ्घ्य स्तोत्राधिक्येन वर्तमानत्वादत्यतिरात्रः। एकोनत्रिंश-त्स्तोत्राण्यतिरात्रेऽप्तोर्यामे तु त्रयस्त्रिंशदित्याधिक्यमतोऽतिरात्रद्वाराऽप्तोर्यामस्या-ग्निष्टोमे प्रवेशः।

उक्तं सर्वयज्ञक्रतुत्वान्तर्भावमुपसंहरति—

एतद्वै ये च पुरस्ताद्ये चोपरिष्टाद्यज्ञक्रतवस्ते सर्वेऽ-ग्निष्टोममपियन्ति, इति।

एतद्वा एतेनैवोक्तप्रकारेणाग्निष्टोमस्य पूर्वभाविन इष्ट्यग्निहोत्रादयो ये यज्ञ-क्रतवो ये चोत्तरभाविन उक्थ्यवाजपेयादयो यज्ञक्रतवस्ते सर्वेऽग्निष्टोमं प्राप्नु-वन्ति।

अथ प्रकारान्तरेणाग्निष्टोमं प्रशंसति—

तस्य संस्तुतस्य नवतिशतं स्तोत्रियाः सा या नव-तिस्ते दश त्रिवृतोऽथ या नवतिस्ते दशाथ या दश तासामेका स्तोत्रियोदेति त्रिवृत्परिशिष्यते सोऽसावेकविंशोऽध्याहितस्तपति विषुवान्वा एष स्तोमानां दश वा एतस्मादर्वाञ्चस्त्रिवृतो दश पराञ्चो मध्य एष एकविंश उभयतोऽध्याहितस्तपति तद्याऽ-सौ स्तोत्रियोदेति सैतस्मिन्नध्यूहळा स यजमानस्त-द्दैवं क्षत्रं सहो बलम्, इति।

तस्याग्निष्टोमस्योद्गातृभिः संस्तुतस्य स्तोत्रियाः स्तोत्रसंबन्धिन्य ऋचो नवत्यधिकं शतं संपद्यन्ते। कथमिति चेत्तदुच्यते। प्रातःसवने बहि-ष्पवमानाख्यं यत्स्तोत्रं तस्य त्रिवृत्स्तोमः क्रियते। त्रिवृतश्चाऽऽवृत्तिरहि-तत्वाद्विद्यमानेषु त्रिषु तृचेषु विद्यमाना नवर्चः स्तोत्रिया भवन्ति। तत ऊर्ध्वं चत्वार्याज्यस्तोत्राणि तेष्वेकैकस्मिन्नपि विद्यमानानां तिसृणामृचामावृत्तिविशेषेण पञ्चदशस्तोमः संपादनीयः। तथा सत्येकैकस्मिन्स्तोत्रे पञ्चदशर्च इत्येवं चतुर्षु स्तोत्रेषु मिलिता षष्टिः संपद्यते। तदेवं प्रातःसवन एकोनसप्ततिः। माध्यंदिने सव-ने माध्यंदिनपवमानाख्यमेकं स्तोत्रम्। तस्यापि पञ्चदशस्तोमयुक्तत्वात्स्तोत्रियाः पञ्चदश संपद्यन्ते। चत्वारि पृष्ठस्तोत्राणि तेषु सप्तदशस्तोमे कृते सत्यष्टषष्टिसं-ख्याकाः स्तोत्रिया भवन्ति। उभयं मिलित्वा माध्यंदिनसवने त्र्यशीतिः संपद्यते। तृतीयसवन आर्भवपवमानस्तोत्रस्य सप्तदशस्तोमोपेतत्वात्तस्मिन्सप्तदश ऋचः।

यज्ञायज्ञीयस्तोत्रस्यैकविंशस्तोमोपेतत्वात्तत्रैकविंशतिर्मिलित्वा तृतीयसवनेऽष्टात्रिंशत् । एवं सवनत्रये मिलित्वा नवत्यधिकशतसंख्याकाः स्तोत्रिया भवन्ति। तत्र या नवतिस्ते दशसंख्याकास्त्रिवृतः स्तोमाः संपद्यन्ते । एकैकस्मिन्दशकेऽन्तिमामेकां परित्यज्यावशिष्टानामृचां नवसंख्योपेतत्वात्त्रिवृत्स्तोमत्वम् । ततो नवसु दशकेषु नव त्रिवृत्स्तोमाः । यास्तु तेषु नवकेषु परित्यक्ता नवर्चः स एकस्त्रिवृत्स्तोमः । एवं दशसंख्याकास्त्रिवृत्स्तोमाः । अथानन्तरं यच्छतमस्ति तस्मिन्नपि या नवतिस्ते पूर्वोक्तन्यायेन दश त्रिवृत्स्तोमा गणनीयाः । अथ नवतेरूर्ध्वभाविन्यो या ऋचो दश तासां दशानामृचां मध्य एका स्तोत्रियोदेत्यतिरिच्यते । अवशिष्टासु स्तोत्रियासु त्रिवृत्स्तोमः परिशिष्यते । एवं सत्येकविंशतिसंख्याकास्त्रिवृत्स्तोमास्तेभ्योऽतिरिक्ता काचिदृगित्येतावत्संपन्नम् । तत्रैकविंशतित्रिवृत्स्तोमसंघो योऽस्ति स सर्वोऽप्यसौ मण्डले दृश्यमान एकविंशतिसंख्यापूरकोऽध्याहितो मण्डले स्थापित आदित्यस्तपति प्रकाशते । आदित्यस्यैकविंशतिसंख्यापूरकत्वमन्यत्र श्रुतम्—"द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः" इति। यत्तु सत्रं गवामयनाख्यं तत्र यान्येकविंशत्यहानि तत्सादृश्यादपि यथोक्तस्त्रिवृत्स्तोमसंघः प्रशस्तः । कथं सादृश्यमिति तदुच्यते। तस्मिन्सत्रे यन्मध्यममहस्तद्विषुवन्नामकं दिवाकीर्त्यम् । तस्य पुरस्ताद्दशाहान्युपरिष्टाद्दशाहानि । एवमत्रापि पूर्वोक्तरीत्या संपादितानामेकविंशतिसंख्याकानां त्रिवृत्स्तोमानां मध्ये यस्त्रिवृत्स्तोमः स एव विषुवान्भविष्यति। एतस्माद्विषुवद्रूपात्स्तोमादर्वाञ्चः पूर्वभाविनो दश त्रिवृत्स्तोमाः । पराञ्च उत्तरभाविनोऽपि दश त्रिवृत्स्तोमाः उभयोर्दशकयोर्मध्य एष एकविंशतिसंख्यापूरकस्त्रिवृत्स्तोम उभयतोऽध्याहितः पार्श्वद्वये दशकव्याप्तः संस्तपत्यादित्यवत्प्रकाशते । तत्तत्रैकविंशतित्रिवृत्स्तोमेभ्य ऊर्ध्वं याऽसावृगेका स्तोत्रियोदेत्यतिरिक्ता भवति सेयमेतस्मिन्नेकविंशतिसंघेऽध्यूह्ळाऽधिकत्वेनावस्थापिता । स यजमानोऽतिरिक्तस्तोत्रियारूपो यजमानत्वेनावगन्तव्यः । किंच तत्स्तोत्रियारूपं दैवं क्षत्रं देवसंबन्धिनी क्षत्रियजातिरिन्द्रवरुणादिरूपा तत्क्षत्रं सहः पराभिभवक्षमं बलं सैन्यम् । एवमग्निष्टोमः स्तोत्रिय(या)द्वारा प्रशस्तः ।

उक्तार्थवेदनं प्रशंसति—

अश्नुते ह वै दैवं क्षत्रं सहो बलमेतस्य ह सायुज्यं
सरूपतां सलोकतामश्नुते य एवं वेद ॥४१॥ इति ।

उक्तार्थवेदिता पराभवसहिष्णुसैन्योपेतामिन्द्रादिदैवक्षत्रियजातिमश्नुते प्रा-

-नोति । तत्र तेन क्षत्रेणेन्द्रादिना सायुज्यं सहवासं सरूपतां समानरूपत्वं स-
लोकतामेकलोकावस्थितिं च प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्रा-
ह्मणभाष्ये चतुर्दशाध्याये तृतीयः खण्डः ॥ ३ ॥ (४१) [११२] ।

---

अथ त्रिवृदादिस्तोमचतुष्टयद्वारेणाग्निष्टोमं स्तोतुमाख्यायिकामाह—

देवा वा असुरैर्विजिग्याना ऊर्ध्वाः स्वर्गं लोक-
मायन्सोऽग्निर्दिविस्पृगूर्ध्व उदश्रयत स स्वर्गस्य
लोकस्य द्वारमवृणोदग्निर्वै स्वर्गस्य लोकस्या-
धिपतिस्तं वसवः प्रथमा आगच्छंस्त एनम-
ब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति स
नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति
तं ते त्रिवृता स्तोमेनास्तुवंस्तान्स्तुतोऽत्यार्जत ते
यथालोकमगच्छन्, इति ।

ये देवा अग्निसहिताः पूर्वमसुरैः सह युद्धं कृत्वा विजिग्याना विजयं प्राप्तास्ते देवा ऊर्ध्वगामिनः सन्तः स्वर्गं लोकमायन्प्राप्नुवन् । तदानीं सोऽग्निः स्वस्थान एव स्थित्वा दिविस्पृग्द्युलोकं स्पृशन्नूर्ध्वमुन्नतः सन्नुदश्रयतोपरितनं देशमाश्रितवान् । द्युलोकपर्यन्तं स्वकीयां ज्वालां वर्धितवानित्यर्थः । ततः सोऽग्निः स्वर्गलोकद्वारमवृणोत्तयाऽऽच्छादितमकरोत् । न चेतरेषु देवेषु स्थितेषु कथमग्नेरीदृक्सामर्थ्यमिति वाच्यम् । यस्मादग्निरेव स्वर्गलोकस्याधिपतिः । अग्नौ ह्यग्निष्टोमादिकर्माण्यनुष्ठाय स्वर्गं प्राप्नुवन्ति । तं स्वर्गद्वारनिरोधिनमग्निमष्टौ वसवः प्रथमाः पुरोगामिनो भूत्वाऽऽगच्छन्प्राप्तवन्तः । प्राप्य चैनमग्निं ते वसव एवमब्रुवन् । हेऽग्ने त्वं नोऽस्मानत्यर्जसि त्वदीयां ज्वालामतिलङ्घ्यार्जयितुं स्वर्गं प्रापयितुमर्हसि। नोऽस्माकं तत्प्राप्त्यर्थमाकाशं त्वदीयज्वालाशमनेनावकाशं कुर्विति । ततः सोऽग्निरेवमब्रवीत् । युष्माभिरस्तुतोऽहं नातिस्रक्ष्ये द्वारावरोधं न परित्यक्ष्यामि तस्मादवरोधपरिहाराय नु क्षिप्रमेव मामग्निं स्तुत स्तोत्रं कुरुतेति । ते वसवस्तथेत्यङ्गीकृत्य त्रिवृन्नामकेन स्तोमेनाग्निमस्तुवन् । तस्य च स्तोमस्य विधायकं छन्दोगब्राह्मणमेवमाम्नायते—'तिसृभ्यो हिं करोति स प्रथमया तिसृभ्यो हिं करोति स मध्यमया तिसृभ्यो हिं

करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः' इति । अस्यायमर्थः । उपास्मै गायता नर इति यः प्रथमस्तृचो दविद्युतत्या रुचेति यो द्वितीयस्तृचः पवमानस्य ते कव इति यस्तृतीयस्तृच एतेषु त्रिषु तृचात्मकेषु सूक्तेषु विद्यमानानां नवानामृचां त्रिभिः पर्यायैर्गानं कर्तव्यम् । तत्र प्रथमे पर्याये त्रिषु सूक्तेष्वाद्यास्तिस्र ऋचो गातव्याः । द्वितीयपर्याये मध्यमा ऋचो गातव्याः । तृतीयपर्याय उत्तमा ऋचो गातव्याः । तिसृभ्य इति तृतीयार्थे पञ्चमी । हिं करोतीत्यनेन गानमुपलक्ष्यते । सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः स्तुतिप्रकारविशेषः । तस्या विष्टुतेरुद्यतीत्येवं नामधेयमिति । ईदृशेन स्तोमेन स्तुतोऽग्निस्तान्वसूनत्यार्जत [निरुद्धं द्वारमतिलङ्घ्य स्वर्गमध्ये प्रापितवान् । ते च वसवो देवा यथालोकं स्वस्य स्वस्योचितं लोकं स्थानविशेषमनतिक्रम्य तत्राऽऽगच्छन् ।

अथ पञ्चदशस्तोमेन स्तुतिं दर्शयति—

तं रुद्रा आगच्छंस्त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति तं ते पञ्चदशेन स्तोमेनास्तुवंस्तान्स्तुतोऽत्यार्जत ते यथालोकमगच्छन्, इति ।

पञ्चदशनामकस्य स्वरूपं छन्दोगैरेवमाम्नायते—' पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः' इति । अस्यार्थः । तृचात्मकमेकं सूक्तं त्रिरावर्तनीयम् । तत्र प्रथमायामावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायां उत्तमावृत्तावुत्तमायाः सोऽयं पञ्चदशस्तोम इति । अन्यत्पूर्ववद्व्याख्येयम् ।

अथ सप्तदशस्तोमेन स्तुतिं दर्शयति—

तमादित्या आगच्छंस्त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति तं ते सप्तदशेन स्तोमेनास्तुवंस्तान्स्तुतोऽत्यार्जत ते यथालोक-

---

१ ख. 'यास्तृतीयावृ' ।

मगच्छन्, इति ।

सप्तदशस्तोमस्य स्वरूपं छन्दोगैरेवमाम्नायते—'पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः' इति । अत्र प्रथमावृत्तौ प्रथमायामृचि त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाम् । तृतीयावृत्तौ मध्यमोत्तमयोः । सोऽयं सप्तदशस्तोम इति । अन्यत्पूर्ववत् ।

एकविंशस्तोमेन स्तुतिं दर्शयति—

तं विश्वे देवा आगच्छंस्त एनमब्रुवन्नाति
नोऽर्जस्याकाशं नः कुर्विति स नास्तुतोऽ-
तिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति
तं त एकविंशेन स्तोमेनास्तुवंस्तान्स्तु-
तोऽत्यार्जत ते यथालोकमगच्छन्, इति ।

एकविंशस्तोमस्य स्वरूपं छन्दोगैरेवमाम्नायते—'सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः' इति । प्रथमपर्याये तृचस्योत्तमाया ऋचः सकृत्पाठः । द्वितीयपर्याये प्रथमायाः सकृत्पाठस्तृतीयपर्याये मध्यमायाः सकृत्पाठः । अथ शिष्टानां तु सर्वत्र त्रिरावृत्तिः । सोऽयमेकविंशस्तोम इति । अन्यत्पूर्ववद्व्याख्येयम् ।

स्तोमचतुष्टयमुपसंहरति—

एकैकेन वै तं देवाः स्तोमेनास्तुवंस्तान्स्तु-
तोऽत्यार्जत ते यथालोकमगच्छन्, इति ।

अग्निष्टोमप्रयोगे चतुर्णामुक्तानां स्तोमानां विकल्पशङ्काव्यावृत्त्यर्थं समुच्चयं विधत्ते—

अथ हैनमेष एतैः सर्वैः स्तोमैः
स्तौति यो यजते, इति ।

अर्थवादवैलक्षण्येन विधित्वं द्योतयितुमथशब्दः । योऽग्निष्टोमेन यजत एष एतैश्चतुर्भिः स्तोमैः स्तुवीत ।

अनुष्ठातुः स्वर्गप्राप्तिफलस्य सिद्धत्वात्तेन सह समुच्चित्य वेदितुरपि तत्फलं दर्शयति—

यश्चैनमेवं वेदाती तु तमर्जाताः( र्जते ), इति ।

यजमानो येन प्रकारेण यजतेऽनेनैव प्रकारेणैनमग्निष्टोमं यश्च वेद तमपि वेदितारं द्वारनिरोधमतिलङ्घ्यार्जाते( र्जत ए )व प्रापयत्येव । अती त्विति दीर्घश्छान्दसः ।

वेदनमात्रेणानुष्ठानसमफलत्वं प्रतिपादयितुं पुनरप्याह—

अति ह वा एनमर्जते स्वर्गं
लोकमभि य एवं वेद ॥४२॥ इति ।

वेदनमात्रेण सिद्धेऽपि फले कर्मभूयस्त्वात्फलभूयस्त्वमिति न्यायेनानुष्ठानवैयर्थ्यं नास्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये चतुर्दशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (४२) [११३] ।

---

अथाग्निष्टोमादिशब्दानिर्वचनेन प्रशंसति—

स वा एषोऽग्निरेव यदग्निष्टोमस्तं यदस्तुवंस्तस्मादग्निस्तोमस्तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः, इति ।

योऽयमग्निष्टोमोऽस्ति स एष साक्षादग्निरेव स्वशरीरमेव । त्रिभिश्छन्दोभिस्त्रिभिः सवनैश्च विभज्य क्रतोर्निष्पादितत्वात् । तं क्रतुरूपमग्निं यद्यस्मात्कारणाद्देवा अस्तुवंस्तस्मादग्निविषयस्तुतियुक्तत्वादयं क्रतुरग्निस्तोम इत्येतन्नामकः । तन्नामयुक्तं क्रतु(तुं) परोक्षनाम्ना व्याहर्तुं सकारतकारयोः षकारटकारावादिश्याग्निष्टोम इति वैदिका आचक्षते । वर्णान्तरेणाव्यवहितार्थप्रतीतिरहितं नाम परोक्षमित्युच्यते । यस्माल्लोके देवाः पूज्या आचार्यादयः परोक्षनामप्रिया एव तस्मात्क्रतोरपि तद्युक्तम् ।

नामान्तरस्य निर्वचनं दर्शयति—

तं यच्चतुष्टया देवाश्चतुर्भिः स्तोमैरस्तुवंस्तस्मा-

---

१ क. ङ. 'थ्यार्जाते' । २ ख. 'ष्टोमश' ।

श्चतुस्तोमस्तं चतुस्तोमं सन्तं चतुष्टोम इत्या-
चक्षते परोक्षेण परोक्षप्रिया इव हि देवाः, इति ।

चतुष्टयाश्चतुर्विधा वसवो रुद्रा आदित्या विश्वे देवाश्चेति । स्तोमाश्च त्रिवृ-त्पञ्चदशः सप्तदश एकविंश इत्येवं चत्वारः । चतुष्टोमनामनिर्वचनं पूर्ववद्यो-जनीयम् ।

ज्योतिष्टोमनामनिर्वचनं दर्शयति—

अथ यदेनमूर्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्माज्ज्यो-
तिस्तोमस्तं ज्योतिस्तोमं सन्तं ज्योतिष्टोम इत्या-
चक्षते परोक्षेण परोक्षप्रिया इव हि देवाः, इति ।

अथ नामद्वयानन्तरं तृतीयं नाम । कथ्यत इति शेषः । अग्निर्भूमिमारभ्य द्युलोकपर्यन्तमूर्ध्वावस्थितस्तथा प्रकाशमानत्वाज्ज्योतिर्भूतस्तं तादृशं देवा अस्तुवंस्तस्माज्ज्योतिस्तोमः । ज्योतिषः स्तोमः स्तुतिरस्मिन्क्रतौ स ज्योति-स्तोमः । अन्यत्पूर्ववत् ।

नामनिर्वचनेन प्रशस्य पुनरप्याद्यन्तराहित्येन प्रशंसति—

स वा एषोऽपूर्वोऽनपरो यज्ञक्रतुर्यथा
रथचक्रमनन्तमेवं यदग्निष्टोमस्तस्य
यथैव प्रायणं तथोदयनम्, इति ।

स एषोऽग्निष्टोमः पूर्वापररहितः पूर्व आदिरपरोऽन्त आद्यन्तरहितो यज्ञ-क्रतुः । यथा लोके रथचक्रमनन्तं पुनः पुनः परिवर्तमानस्य रथचक्रस्यायमा-दिरयमन्त इति विभागः कर्तुं न शक्यते तस्मादिदमन्तरहितम् । आदिरहित-स्याप्येतदुपलक्षणम् । एवं क्रतुरपि । ननु प्रायणीयेष्टिरादिरुदयनीयेष्टिरन्त इति चेत् । मैवम् । योऽग्निष्टोमोऽस्ति तस्य यादृशं प्रायणीयं कर्म तादृशमेवो-दयनीयं कर्म । तयोः समानधर्मकत्वादतो विवेक्तुमशक्यत्वादाद्यन्तरहितः क्रतुः ।

उक्तमर्थं मन्त्रोदाहरणेन द्रढयति—

तदेषाऽभि यज्ञगाथा गीयते यदस्य पूर्वमपरं
तदस्य यद्वस्यापरं तद्वस्य पूर्वम् । अहेरिव सर्पणं
शाकलस्य न विजानन्ति यतरत्परस्तादिति, इति ।

सर्वैरपि सुभाषितत्वेन गीयत इति गाथा यज्ञविषया गाथा । तत्तस्मिन्नग्निष्टोमस्याऽऽद्यन्तयोः प्रायणीयोदयनीयोरेव विषये काचिदेषा यज्ञगाथाऽभिज्ञैर्गीयते सर्वतः पठ्यते यदस्येत्यादिगाथा । अस्याग्निष्टोमस्य यत्पूर्वमुपक्रमरूपं कर्मास्ति तदेवास्यापरं समाप्तिरूपं कर्म । यदु यदप्यस्यापरं समाप्तिपरं तदु तदेवास्य पूर्वमुपक्रमरूपम् । आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चरुरिति द्रव्यदेवतयोरुभयत्रैकविधत्वात्तयोरेकत्वोपचारः । आद्यन्तयोरपरिज्ञाने पूर्वं ब्राह्मणे रथचक्रदृष्टान्तो दर्शितः । मन्त्रे त्वन्यो दृष्टान्त उच्यते । शाकलशब्दः सर्पविशेषवाची । शाकलनाम्नोऽहेः सर्पविशेषस्य यथा सर्पणं गमनं तथैवायमग्निष्टोमः । स च सर्पणकाले मुखेन पुच्छस्य दंशनं कृत्वा वलयाकारो भवति । तत्र किं मुखं किं वा पुच्छमिति न ज्ञायत एवमत्राप्यदितिदेवताकस्य चरोः साम्ये सति प्रायणीयोदयनीययोर्यतरत्कर्म परस्तात्पश्चाद्भावि यतरच्च पूर्वभावि किमपि न विजानन्ति ।

अस्य गाथायास्तात्पर्यं संक्षिप्य दर्शयति—

यथा ह्येवास्य प्रायणमेवमुदयनमसदिति, इति ।

अस्याग्निष्टोमस्य प्रायणं प्रारम्भो यादृश एवमुदयनं समाप्तिरसदस्ति । भवतीत्यर्थः ।

अत्र कंचिदाक्षेपमुद्भावयति—

तदाहुर्यत्त्रिवृत्प्रायणमेकविंशमुदयनं केन ते समे इति, इति ।

पूर्वोदाहृतत्रिवृत्स्तोमः प्रातःसवनादौ प्रयोज्यत्वात्प्रायणमुपक्रमरूपम् । एकविंशस्तोमस्तु तृतीयसवनान्ते प्रयोज्यत्वादुदयनं समाप्तिरूपम् । केन कारणेन ते प्रायणोदयने समे भवेतामित्याक्षेपः ।

तत्र परिहारं दर्शयति—

यो वा एकविंशस्त्रिवृद्वै सोऽथो यदुभौ तृचौ तृचिनाविति ब्रूयात्तेनेति ॥ ४३ ॥ इति ।

योऽयमेकविंशस्तोमोऽस्ति स एव त्रिवृदवगन्तव्यः, स्तोमत्वाकारेण तयोरेकविधत्वात् । अथो अपि च यद्यस्मात्कारणात्स्तोमद्वयाश्रयभूतावुभौ तृचौ तृचिनौ तृचि(च)त्वधर्मयुक्तौ । तत्र त्रिवृत्स्तोमाश्रयस्योपास्मै गायता नर इति सूक्तस्य तृचत्वधर्मः प्रसिद्ध एव । एकविंशस्तोमाश्रयस्य यज्ञा यज्ञा वो अग्नय

इति सूक्तस्य प्रगाथे द्वे एव तस्मिन्नृचावाम्नायेते। तथाऽपि स्तोत्रकाले प्रग्रथनेन पादानावर्त्य तृचत्वं संपाद्यते। तेन तृचत्वधर्मोपेतत्वकारणेन द्वयोः स्तोमयोरेकविधत्वमित्युत्तरं ब्रूयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्दशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (४३) [११४]।

---

पुनरादित्यसाम्येन प्रशंसति—

यो वा एष तपत्येषोऽग्निष्टोम एष साह्नस्तं सहैवाह्ना संस्थापयेयुः साह्नो वै नाम, इति।

य एव प्रसिद्ध एषोऽस्मत्प्रत्यक्ष आदित्यस्तपति, एषोऽग्निष्टोमस्तयोरादित्याग्निष्टोमयोः सदृशत्वात्। कथं साम्यमिति तदुच्यते। एषोऽग्निष्टोम आदित्यवत्साह्न आदित्योऽह्ना सह वर्तते तथाऽयमपि। तमग्निष्टोमं यत एकेनाह्ना समापयेयुस्तस्मादादित्यस्येव साह्न इति क्रतोर्नाम संपन्नम्।

इदानीमग्निष्टोमानुष्ठाने त्वरां निषेधति—

तेनासंत्वरमाणाश्चरेयुर्यथैव प्रातःसवन एवं माध्यंदिन एवं तृतीयसवन एवमु ह यजमानोऽप्रमायुको भवति, इति।

यस्मादेकमहः साकल्येनानुष्ठानाय पर्याप्तं तेन कारणेन सर्वेऽप्यृत्विजोऽसंत्वरमाणास्त्वरामकुर्वन्त उत्तरोत्तरानुष्ठानं सम्यक्पर्यालोचयन्तश्चरेयुरनुतिष्ठेयुः। यथैव प्रातःसवने मध्यरात्रादूर्ध्वमारभ्य मध्याह्नात्पूर्वकालस्यानुष्ठानपर्याप्तत्वान्नास्ति त्वरैवमुत्तरयोरपि सवनयोः। एवमु हानेनैव प्रकारेण शनैरनुष्ठाने सति बुद्धिसमाधानेनाङ्गलोपाभावाद्यजमानोऽप्रमायुकोऽपमृत्युरहितो भवति।

विपक्षे बाधकं दर्शयति—

यद्ध वा इदं पूर्वयोः सवनयोरसंत्वरमाणाश्चरन्ति तस्माद्धेदं प्राच्यो ग्रामता बहुलाविष्टा अथ यद्धेदं तृतीयसवने संत्वरमाणाश्चरन्ति तस्माद्धेदं प्रत्यञ्चि दीर्घारण्यानि भवन्ति तथा ह यजमानः प्रमायुको भवति, इति।

यद्ध वै यदि प्रथमद्वितीययोः सवनयोः कालसंकोचाभावादसंत्वरमाणा इदं कर्म चरन्त्यनुतिष्ठेयुस्तदानीं तस्माद्ध तस्मादेवाङ्गलोपाभावात्कारणादिदं दृश्यते । किमिदमिति तदुच्यते । प्राच्यो ग्रामतः पूर्वदिग्वर्तिनो ग्रामसमूहा बहुलाविष्टा बहुभिर्जनैः संपूर्णा भवन्ति । अथ तद्विपर्ययेण यद्ध यदि तृतीयसवने कालसंकोचमाशङ्क्य संत्वरमाणा अतित्वरया युक्ता इदं कर्म चरन्त्यनुतिष्ठन्ति तस्माद्ध तदानीमङ्गवैकल्यसंभवादेवेदं लोके दृश्यते प्रत्यञ्चि पश्चिमदिग्वर्तीनि दीर्घारण्यानि जनशून्यानि भवन्ति । तथा ह तादृशेन संभाविताङ्गवैकल्ययुक्तेनानुष्ठानेन यजमानः प्रमायुको भवति । अपमृत्युना म्रियत इत्यर्थः ।

विपक्षे बाधकमुक्त्वा स्वपक्षं निगमयति—

तेनासंत्वरमाणाश्चरेयुर्यथैव प्रातःसवन एवं माध्यंदिन एवं तृतीयसवन एवमु ह यजमानोऽप्रमायुको भवति, इति ।

अथ त्रिषु सवनेषु शस्त्रस्योत्तरोत्तरं ध्वन्याधिक्यं विधत्ते—

स एतमेव शस्त्रेणानु पर्यावर्तेत यदा वा एष प्रातरुदेत्यथ मन्द्रं तपति तस्मान्मन्द्रया वाचा प्रातःसवने शंसेदथ यदाऽभ्येत्यथ बलीयस्तपति तस्माद्बलीयस्या वाचा मध्यंदिने शंसेदथ यदाऽभितरामेत्यथ बलिष्ठतमं तपति तस्माद्बलिष्ठतमया वाचा तृतीयसवने शंसेदेवं शंसेद्यदि वाच ईशीत वाग्घि शस्त्रं यया तु वाचोत्तरोत्तरिण्योत्सहेत समापनाय तया प्रतिपद्येतैतत्सुशस्ततममिव भवति, इति ।

स होतैतमेवाऽऽदित्यमनुसृत्य शस्त्रेण पर्यावर्तेत, यथा यथाऽऽदित्य उत्तरोत्तराधिक्येन तपति तथा तथैवोत्तरोत्तरध्वन्याधिक्येन होता शंसेत् । यदा वा इत्यादिना तदेव स्पष्टी क्रियते । यस्मिन्नेव काल एष आदित्यः प्रातरुदेति प्रातःकालमभिव्यञ्जयितुमुदितो भवति, अथ तदानीं मन्द्रमल्पं यथा भवति तथा तपति तस्मादादित्यमनुवर्तमानो होता प्रातःसवने मन्द्रया स्वल्पध्वन्युपेतया वाचा शंसेत् । अथ प्रातःकालादूर्ध्वं यदाऽभ्येति मध्याह्नकालं निष्पाद-

यितुमाभिमुख्येनोर्ध्वं गच्छति, अथ तदानीं सूर्यो बलीयः प्रबलं यथा भवति तथा तपति तस्माद्धोताऽपि बलीयस्या प्रबलध्वनियुक्तया वाचा मध्यंदिने शंसेत्। अथ मध्याह्नादूर्ध्वं यदा सूर्योऽभितरामेति पश्चिमाभिमुखानां पुरुषाणामत्यन्तमाभिमुख्येन गच्छति, अथेदानीमादित्यो बलिष्ठतमं तपति मध्याह्नतापादप्यत्यन्तं प्रबलस्तापो भवति। भूमौ दिक्षु चोष्णत्वबाहुल्यात्। तस्मात्तदानीं होता माध्यंदिनसवनध्वनेरप्यधिकध्वनियुक्तया वाचा तृतीयसवने शंसेत्। यद्ययं होता वाच ईशीतेश्वरो भवेद्दुष्यवाक्स्याच्छ्लेष्मादिदोषेण ध्वनेर्मान्द्यं न प्राप्नुयात्तदानीं येन ध्वनिना तृतीयसवने प्रारम्भः कृत एवं तेनैव ध्वनिना शंसेत्। किमर्थं ध्वन्याधिक्यमिति तदुच्यते। यस्माद्वागेव शस्त्रम्। वाङ्निष्पाद्यत्वात्। तस्माद्यया तु यादृशध्वनियुक्तयेव वाचोत्तरोत्तरिण्योत्तरोत्तराभिवृद्धिभाजा समापनायोत्सहेत शस्त्रं समापयितुमुत्साहवान्भवेत्। न तु मध्ये नीचध्वनिर्भवेत्। तथा(या) तथाविधध्वन्युपेतया वाचा शस्त्रं प्रतिपद्येत प्रारभेत। तदेतदुक्तलक्षणोपेतं शस्त्रं सुशस्ततममिव भवति श्रुतिवैकल्यराहित्येनात्यन्तं शस्तमेव भवति।

ननु तृतीयसवने त्वरायन्तरेण शनैः शंसेदिति पूर्वत्रोक्तम्। तथा सति कालस्याल्पत्वेन समापनात्प्रागेव सूर्योऽस्तमियादित्याशङ्क्य वस्तुतोऽस्तमयाभावान्नास्ति दोष इत्यभिप्रेत्याऽऽह—

स वा एष न कदाचनास्तमेति नोदेति, इति।

अस्तमयः स्वरूपनाशः। उदयः सूर्योत्पत्तिः। न हि सूर्यस्य कदाचिदपि स्वरूपनाशोत्पत्ती विद्येते।

कथं तर्हि जनानां सूर्यास्तमयव्यवहार इत्याशङ्क्याऽऽह—

तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाऽथाऽऽत्मानं विपर्यस्यते रात्रीमेवावस्तात्कुरुतेऽहः परस्तात्, इति।

यद्यदा प्राणिनः सूर्योदयादूर्ध्वं यामचतुष्टयानन्तरं सूर्योऽस्तमेतीति तं सूर्यमस्तमितं मन्यन्ते तत्तदानीं सूर्यस्तत्प्राणियुक्ते देशे प्रकाशरूपस्याह्न एवान्तमित्वा समाप्तिं प्राप्याथानन्तरं स्वात्मानं विपर्यस्यते विपर्यस्तं करोति। कथं विपर्यास इति स उच्यते। अवस्तादतीते देशे रात्रिमेव कुरुते परस्तादागामिनि देशेऽहः कुरुते। अयमर्थः। मेरोः प्रदक्षिणं कुर्वन्नादित्यो यद्देशवासिनां प्राणिनां दृष्टिपथमागच्छति तद्देशवासिभिरयमुदेतीति व्यवह्रियते। यद्देशवासिनां

दृष्टिपथमतिक्रम्य सूर्ये गते सति सूर्योऽस्तमेतीति तद्देशवासिभिर्व्यवह्रियते । अतस्तस्मिन्देशे रात्रिर्भवति । आदित्येन गन्तव्ये देशान्तरे तद्देशवासिभिः प्राणिभिः सूर्यस्य दृष्टत्वादहर्भवति । एवं च सति सूर्यस्य विनाशरूपोऽस्तमयः कदाचिदपि नास्तीति सिद्धम् ।

अनेनैव न्यायेन सूर्यस्य स्वरूपोत्पत्तिलक्षणोदयाभावं दर्शयति—

अथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रे-
रेव तदन्तमित्वाऽथाऽऽत्मानं विपर्यस्यतेऽ-
हरेवावस्तात्कुरुते रात्रिं परस्तात्, इति ।

पूर्ववद्व्याख्येयम् ।

परमार्थतोऽस्तमयस्याभावं निगमयति—

स वा एष न कदाचन निम्रोचति, इति ।

निम्रोचनमस्तमयः । एतस्योपलक्षणत्वान्न कदाचिदुदेतीत्यपि द्रष्टव्यम् ।

वेदनं प्रशंसति—

न ह वै कदाचन निम्रोचत्येतस्य ह
सायुज्यं सरूपतां सलोकतामश्नुते य
एवं वेद य एवं वेद ॥४४॥ इति ।

वेदितुरस्तमयाभावो नामापमृत्युराहित्यमिह जन्मनि तादृशो भूत्वा पश्चादेतस्याऽऽदित्यस्य सहवाससमानसरूपत्वसमानलोकत्वानि प्राप्नोति । न च सहवासेनैव समानलोकत्वं सिध्यतीति वाच्यम् । कदाचिदपि स्वेच्छया पृथगवस्थानेऽपि तल्लोकभ्रंशो नास्तीति विवक्षया समानलोकत्वमुच्यते । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्दशाध्याये षष्ठः खण्डः ॥ ६ ॥ (४४) [११५] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये
चतुर्दशोऽध्यायः ॥ १४ ॥

====

अथ पञ्चदशोऽध्यायः ।

---

अग्निष्टोमः सर्वयज्ञक्रतूनां
योनित्वेनास्तूयत प्राक्परस्तात् ।
देवैः स्तोमैः संस्तुतोऽसौ चतुर्भि-
र्वाचा मन्द्रैर्मध्यगैरुत्तमैश्च ॥

अथेष्टिसंस्थादिकं व्यक्तव्यम् । तत्र दीक्षणीयेष्टेः संस्थामाख्यायिकया दर्शयति—

यज्ञो वै देवेभ्योऽन्नाद्यमुदक्रामत्ते देवा अब्रु-
वन्यज्ञो वै नोऽन्नाद्यमुदक्रमीदान्विमं यज्ञम-
न्नमन्विच्छामेति तेऽब्रुवन्कथमन्विच्छामेति
ब्राह्मणेन च च्छन्दोभिश्चेत्यब्रुवंस्ते ब्राह्मणं
छन्दोभिरदीक्षयंस्तस्याऽऽन्तं यज्ञमतन्वताऽपि
पत्नीः समयाजयंस्तस्माद्धाप्येतर्हि दीक्षणी-
यायामिष्टावान्तमेव यज्ञं तन्वतेऽपि पत्नीः
संयाजयन्ति तमनुन्यायमन्ववायन् , इति ।

पुरा कदाचिद्यज्ञो ज्योतिष्टोमाख्यः केनापि निमित्तेनापरक्तः सन्देवेभ्यः सकाशादुदक्रामन्निष्क्रान्तवान् । तस्मिन्नुत्क्रान्ते तत्फलरूपमन्नाद्यमुदक्रामत् । ततो देवाः परस्परमिदमब्रुवन्यदेतदुभयमस्मदीयमुदक्रामत्तदेतदुभयं सर्वत्रान्विच्छामान्वेषणं करवाम । तत्र कथमन्वेषणमित्युपायं विचार्य ब्राह्मणमृत्विग्यजमानरूपं गायत्र्यादिच्छन्दांसि च तदन्वेषणोपायत्वेन निश्चित्य तैश्छन्दोभिर्ब्राह्मणं यजमानरूपमदीक्षयन्दीक्षणीयेष्ट्या संस्कृतवन्तः । तस्य ब्राह्मणस्य यज्ञं दीक्षणीयेष्टिरूपमान्तं समाप्तिपर्यन्तमतन्वत विस्तारितवन्तः । तं यज्ञमनुष्ठाय पत्नीनामिका देवता अपि समयाजयन्पत्नीसंयाजानुष्ठानमपि कृतवन्त इत्यर्थः । यस्मादेवं देवैः कृतं तस्मादेव कारणादिदानीमपि दीक्षणीयायामिष्टौ चोदकप्राप्तं यज्ञं समाप्तिपर्यन्तमनुतिष्ठन्ति । पत्नीसंयाजानप्यनुतिष्ठन्ति । उत्तरकालीनाङ्गव्यावृत्तये पत्नीसंयाजग्रहणम् । पत्नीसंयाजैरेव समाप्तिरित्यभिप्रेत्याऽऽन्तमित्युक्तम् । तं देवैः कृतमनुन्यायमनुक्रमगतमनुष्ठान-

मनु पश्चान्मनुष्या अप्यन्ववायन्नवगतवन्तोऽनुष्ठितवन्त इत्यर्थः। तमनुन्याय-मिति वाक्यमुत्तरशेषत्वेन वा योज्यम्।

दीक्षणीयेष्टेः पत्नीसंयाजेषु समाप्तिं दर्शयित्वा प्रायणीयस्य शंयुवाके समाप्तिं दर्शयति—

ते प्रायणीयमतन्वत तं प्रायणीयेन नेदीयोऽ-न्वागच्छंस्ते कर्मभिः समत्वरन्त तच्छंय्व-न्तमकुर्वंस्तस्माद्धाप्येतर्हि प्रायणीयं शंय्व-न्तमेव भवति तमनुन्यायमन्ववायन्, इति।

तं देवाः प्रायणीयाख्यं कर्मानुष्ठितवन्तः। प्रायणीयेन कर्मणा तं पूर्वोक्तदीक्षणीयेष्टिरूपं ज्योतिष्टोमरूपं वा यज्ञं नेदीयोऽत्यन्तसमीपे यथा भवति तथैवान्वगच्छन्ननुष्ठितवन्तः। दीक्षणीयेष्टेरूर्ध्वं चिरं व्यवधानमकृत्वा प्रायणीय-मनुष्ठितवन्त इत्यर्थः। ते देवाः कर्मभिः प्रायणीयाङ्गरूपैः समत्वरन्त सम्यक्त्वरां कृतवन्तः। दीक्षणीयेष्टिवत्पत्नीसंयाजपर्यन्तं नान्वतिष्ठन्किंतु त्वरां कृत्वा पत्नीसंयाजेभ्यः पूर्वमेव शंयुवाकपर्यन्तं कृत्वोपरताः। तस्माद्धेत्यादि पूर्ववत्।

अथाऽऽतिथ्येष्टेरन्तं दर्शयति—

त आतिथ्यमतन्वत तमातिथ्येन नेदीयोऽ-न्वागच्छंस्ते कर्मभिः समत्वरन्त तदि-ळान्तमकुर्वंस्तस्माद्धाप्येतर्ह्यातिथ्यमिळा-न्तमेव भवति तमनुन्यायमन्ववायन्, इति।

अनुयाजेभ्यः पूर्वं यदिडोपाह्वानं तदन्तमेवाऽऽतिथ्येष्टिकर्म कृत्वोपरताः। अन्यत्पूर्ववद्व्याख्येयम्।

अथोपसत्स्वनुष्ठेयं दर्शयति—

त उपसदोऽतन्वत तमुपसद्भिर्नेदीयोऽन्वाग-च्छंस्ते कर्मभिः समत्वरन्त ते तिस्रः सामिधे-नीरनूच्य तिस्रो देवता अयजंस्तस्माद्धाप्ये-तर्ह्युपसत्सु तिस्र एव सामिधेनीरनूच्य तिस्रो

देवता यजन्ति तमनुन्यायमन्ववायन्, इति ।

तिस्रः सामिधेन्य आश्वलायनेन दर्शिताः—'उपसद्याय मीढ्ळुष इति तिस्र एकैकां त्रिरनवानं ताः सामिधेन्यः' इति । अग्निः सोमो विष्णुश्चेत्येतास्तिस्रो देवताः । स्पष्टमन्यत् ।

अथाग्नीषोमीयपशावनुष्ठेयं दर्शयति—

त उपवसथमतन्वत तमुपवसथ्येऽहन्याप्नुवं-स्तमाप्त्वाऽऽन्तं यज्ञमतन्वतापि पत्नीः सम-याजयंस्तस्माद्धाप्येतर्ह्युपवसथ आन्तमेव यज्ञं तन्वतेऽपि पत्नीः संयाजयन्ति, इति ।

उपवसथशब्देन सोमयागसमीपवासितत्वात्पूर्वस्मिन्नहन्यनुष्ठेयोऽग्नीषोमीय-पशुर्विवक्षितः । तं पशुं देवा उपवसथ्येऽहनि सोमयागादिनात्पूर्वेद्युः प्राप्नुव-न्प्राप्य च तं यज्ञं समाप्तिपर्यन्तमनुष्ठितवन्तः । पत्नीसंयाजानप्यन्वतिष्ठन् । दीक्षणीयेष्टिवत्पत्नीसंयाजान्तत्वमेव द्रष्टव्यम् । स्पष्टमन्यत् ।

उक्तास्विष्टिषु होतुरनुवचनस्य मन्द्रस्वरं विधत्ते—

तस्मादेतेषु पूर्वेषु कर्मसु शनै-स्तरां शनैस्तरामिवानुब्रूयात्, इति ।

यस्मादग्नीषोमीयात्पूर्वभावित्वेनोपक्रमरूपा दीक्षणीयादयस्तस्मादेतेषु पूर्वेषु दीक्षणीयाद्युपसदन्तेषु कर्मसु शनैस्तरामिवात्यन्तनीचस्वरेणैव होताऽनुब्रूयात् ।

अग्नीषोमीयपशौ होतुरनुवचने ध्वनेरिळा(डा)नुसारित्वं विधत्ते—

अनूत्सारमिव हि ते तमायंस्तस्मादुपव-सथे यावत्या वाचा कामयीत तावत्याऽ-नुब्रूयादाप्तो हि स तर्हि भवतीति, इति ।

अनूत्सारमुत्तरोत्तरभावी सार उत्सारस्तमनुसृत्यानुसृत्येति तस्यार्थः । दीक्षणीयेष्टेः सारभूता प्रायणीयेष्टिः । तदपेक्षया सोमयागस्य समीपवर्तित्वात् । एवमातिथ्यादिषु द्रष्टव्यम् । ईदृशमुत्तरोत्तरसारमनुसृत्य ते देवास्तं सोमयाग-मायन्प्राप्तवन्तः । तस्मादत्यन्तसार उपवसथेऽग्नीषोमीयपशौ होता यावत्या वाचा कामयीत यावन्तमुच्चध्वनिमिच्छेत्तावता ध्वनिनाऽनुवचनं कुर्यात् । तर्हि तस्मिन्नग्नीषोमीयपशुकाले स सोमयागः प्राप्तो भवतीति होतुरभिप्रायः ।

लोकेऽप्यभीष्टे वस्तुनि बन्धौ वा चिरकालेन प्राप्ते जाते हर्षद्योतनायोच्चध्वनिना गानं कुर्वन्ति तद्वदत्रापि द्रष्टव्यम् ।

देवानां यज्ञप्राप्त्युपायमभिधायान्नाद्यप्राप्त्युपायं दर्शयति—

तमाप्त्वाऽब्रुवंस्तिष्ठस्व नोऽन्नाद्यायेति स नेत्यब्रवीत्कथं वस्तिष्ठेयेति तानीक्षतैव तमब्रुवन्ब्राह्मणेन च नश्छन्दोभिश्च सयुग्भूत्वाऽन्नाद्याय तिष्ठस्वेति तथेति तस्माद्धाप्येतर्हि यज्ञः सयुग्भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च च्छन्दोभिश्च ॥ ४५ ॥ इति ।

ते देवास्तं ज्योतिष्टोमयज्ञं प्राप्येदमब्रुवन् । हे यज्ञ नोऽस्माकमन्नाद्यसिद्ध्यर्थं तिष्ठस्व स्थितिं कुर्विति । स यज्ञस्तद्वाक्यं निराकरोत् । अन्नाद्यनिष्पादकं साधनमन्तरेण वो युष्मदर्थं कथं स्थितः स्यामिति स्वाभिप्रायमब्रवीत् । तेष्वनुग्रहद्योतनाय तान्देवानीक्षतैव पश्यन्नेवाऽऽस्त न तूपेक्षां कृतवान् । ततो देवा यज्ञस्याभिप्रायं ज्ञात्वा ते देवास्तं यज्ञमिदमब्रुवन् । हे यज्ञ नोऽस्मदर्थं त्वं साधनेन ऋत्विग्यजमानरूपेण ब्राह्मणेन तत्तन्मन्त्रगतैश्छन्दोभिश्च सयुग्भूत्वा हावस्थितो भूत्वा पश्चादन्नाद्याय तिष्ठस्वाङ्गीकुर्विति । तथा यज्ञोऽप्यङ्गीचकार । यस्मादेवं तस्मादिदानीमपि यज्ञो ब्राह्मणमन्त्रसहितो भूत्वा देवेभ्योऽन्नाद्यरूपं हविर्वहति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चदशाध्याये प्रथमः खण्डः ॥ १ ॥ (४५) [११६] ।

---

दीक्षणीयादिष्वग्नीषोमीयान्तेषु होतुर्ध्वनिविशेषं विधायान्ते ब्राह्मणेनर्त्विजा यज्ञनिष्पत्तिरित्युक्तं तत्र वर्ज्यब्राह्मणविशेषं दर्शयितुं प्रस्तौति—

त्रीणि ह वै यज्ञे क्रियन्ते जग्धं गीर्णं वान्तम्, इति ।

जग्धं भक्षितावशिष्टं भोजनपात्रे स्थितम् । गीर्णमुदरे प्रविष्टम् । वान्तं सकृदुदरे प्रविश्य पुनर्निर्गतम् । तान्येतानि त्रीणि दुर्बुद्धिभिर्यज्ञे क्रियन्ते । जग्धादिस्थानीयानि त्रीणि वर्ज्यानीत्यर्थः ।

तत्र जग्धस्थानीयं दर्शयित्वा निषेधति—

तद्धैतदेव जग्धं यदाशंसमानमार्त्विज्यं कारयत उत वा मे दद्यादुत वा मा वृणीतेति तद्ध तत्पराङेव यथा जग्धं न हैव तद्यजमानं भुनक्ति, इति।

कश्चिद्ब्राह्मण आर्त्विज्यमाशंसते कामयते। केनाभिप्रायेणेति तदुच्यते। आर्त्विज्यार्थं यज्ञशालां मयि गते सति यजमानो मे मह्यमुत वा दद्यात्किंचिद्धनं वा प्रयच्छेदुत वा मा वृणीत प्रयोगाभिज्ञं मां दृष्ट्वा त्वमार्त्विज्यं कुर्विति वृणीतेत्येवं धनार्जनलम्पटः सन्ननुष्ठानतात्पर्यरहितो निरन्तरमार्त्विज्यं कामयते। तादृशं कामयमानं पुरुषं यजमान आर्त्विज्यं कारयत इति यदस्ति तदेव जग्धम्। यथा लोके जग्धं पात्रस्थितं भक्षितावशिष्टमुच्छिष्टत्वादितरैरस्पृश्यं तथा तद्ध तस्मिन्नेव यागे तल्लम्पटस्याऽऽर्त्विज्यं पराङेव निकृष्टमेव। तत्तादृशमार्त्विज्यं यजमानं न भुनक्ति न पालयति। यज्ञो विकलो भवतीत्यर्थः।

गीर्णमुदाहृत्य निषेधति—

अथ हैतदेव गीर्णं यद्बिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्यादिति तद्ध तत्पराङेव यथा गीर्णं न हैव तद्यजमानं भुनक्ति, इति।

यजमानो यस्मिन्ग्रामे यजते तत्र कश्चिद्ब्राह्मणो ग्रामणीः प्रभुर्भूत्वा प्रयोगकौशलरहितोऽवतिष्ठते। तेनाऽऽर्त्विज्यं वर्जयितुमयं यजमानो बिभेति। केनाभिप्रायेणेति तदुच्यते। अयमत्र प्रभुर्मयि द्वेषं कृत्वा कालान्तरे मां बाधेत। अथवेदानीमेव यज्ञवेशसं यज्ञविघातं कुर्यात्। तदुभयं मा भूदित्यनेनाभिप्रायेण तस्माद्भीतिं प्राप्तवानार्त्विज्यं तेन प्रभुणा कारयत इति यदस्ति तदेतद्गीर्णम्। यथा लोके गीर्णमुदरस्थं पुनर्भोगयोग्यं न भवति तथा तद्ध तस्मिन्यागे तद्भीतिमात्रप्रयुक्तमार्त्विज्यं पराङेव निकृष्टमेव। तत्तादृशं प्रयोगकौशलरहितेन प्रभुणा कृतमार्त्विज्यं यजमानं न पालयति।

वान्तं दर्शयित्वा निषेधति—

अथ हैतदेव वान्तं यदभिशस्यमानमार्त्विज्यं

कारयते यथा ह वा इदं वान्तान्मनुष्या
बीभत्सन्त एवं तस्माद्देवास्तद्ध तत्पराङेव
यथा वान्तं न हैव तद्यजमानं भुनक्ति, इति ।

कश्चित्पुरुषः प्रयोगकुशलोऽपि केनचित्पातित्यापवादेन सर्वैर्निन्द्यते । तादृशमभिशस्यमानं यजमानः स्वकीयबन्धुत्वादिदाक्षिण्येनापवादपरिहारार्थमार्त्विज्यं कारयत इति यदस्ति तदेतद्वान्तम् । तत्रेदं निदर्शनमुच्यते । यथा लोके मनुष्या वान्ताद्बीभत्सन्ते वान्तं दृष्ट्वा कश्मलमेतदिति निष्ठीवनं कुर्युरेवं देवास्तस्मादभिशस्यमानकृतादार्त्विज्यात्सर्वे बीभत्सन्ते । ततो यथा लोके वान्तमतिनिकृष्टं तथा तस्मिन्यज्ञे तदार्त्विज्यमतिनिकृष्टम् । तच्च यजमानं सर्वथा न पालयति ।

वर्ज्यत्वेनोक्तं त्रिविधमुपसंहरति—

स एतेषां त्रयाणामाशां नेयात्, इति ।

स यजमान एतेषां पूर्वोक्तानां धनलम्पटभयहेत्वभिशस्तानां त्रयाणामार्त्विज्यार्थं मनस्यपेक्षामपि न कुर्यात् ।

अथ प्रमादकृतस्य प्रायश्चित्तं दर्शयति—

तं यद्येतेषां त्रयाणामेकंचिदकाममभ्याभवेत्तस्यास्ति वामदेव्यस्य स्तोत्रे प्रायश्चित्तिः, इति ।

यदि कदाचिदेतेषां धनलम्पटादीनां त्रयाणां मध्ये वर्तमानं तं पुरुषमेकंचिदेकमप्यकाममबुद्धिपूर्वमभ्याभवेदभिलक्ष्याऽऽर्त्विज्यं भवेत्तदानीं तस्य वैकल्यस्य प्रायश्चित्तिरस्ति । कुत्रास्तीति तदुच्यते । वामदेव्यस्य स्तोत्रे वामदेवमहर्षिणा दृष्टं साम वामदेव्यं कया नश्चित्र आभुवत् [ ४-३१-१ ] इत्येतस्यामृच्युत्पन्नम् । तच्च साम तृचे गायन्त उद्गातारः पृष्ठस्तोत्रमनुतिष्ठन्ति । तत्र कश्चित्प्रयोगविशेषः प्रायश्चित्तिः ।

उक्तं साम प्रशंसति—

इदं वा वामदेव्यं यजमानलोकोऽमृतलोकः स्वर्गो लोकः, इति ।

यजमानस्य लोकः पृथिवी । अमृतलोको मुक्तिपदम् । स्वर्गो देवलोकः ।

इदं वा उक्तलोकत्रयमिदं सर्वमपीदं वामदेव्यम् । कया नश्चित्र इत्यस्यामृच्युत्पन्नमिदं सामगानां प्रसिद्धं वामदेव्याख्यं साम ।

तस्मिन्साम्नि कर्तव्यं प्रायश्चित्तप्रकारं दर्शयति—

तत्त्रिभिरक्षरैर्न्यूनं तस्य स्तोत्र उपसृप्य त्रेधाऽऽत्मानं विगृह्णीयात्पुरुष इति, इति ।

तद्वामदेव्यं साम त्रिभिरक्षरैर्न्यूनम् । कया नश्चित्र इत्यादिकस्तृचो गायत्रीछन्दस्कस्तस्य च च्छन्दसस्त्रिषु पादेषु प्रत्येकमष्टावक्षराण्यपेक्षितानि । अभीषुण इत्येतस्यां तृतीयस्यामृचि प्रतिपादं सप्तैवाक्षराणि । अतस्त्रिभिरक्षरैर्न्यूनत्वम् । तस्य वामदेव्यस्य साम्नः संबन्धिनि स्तोत्र उपसृप्य गानं प्रक्रम्याऽऽत्मानं स्ववाचकं पुरुष इति शब्दं त्रेधा विगृह्णीयात् । प्रत्यक्षरं विभज्यैकैकस्मिन्पादे प्रक्षिपेत् । तद्यथा—अभीषुणः सखीनां पु अविता जरितॄणां रु शतं भवास्यूतिभिः ष इति प्रक्षिप्य गायेत् ।

उक्तप्रकारेणाऽऽर्त्विज्ये वैकल्यपरिहारं दर्शयति—

स एतेषु लोकेष्वात्मानं दधात्यस्मिन्यजमानलोकेऽस्मिन्नमृतलोकेऽस्मिन्स्वर्गे लोके स सर्वां दुरिष्टिमत्येति, इति ।

स कृतप्रायश्चित्तो यजमान एतेषु लोकेषु स्वात्मानं स्थापयति । त एव त्रयो लोका अस्मिन्नित्यादिना स्पष्टी क्रियन्ते । स यजमानः सर्वां दुरिष्टिं दोषोपेतं यज्ञमत्येत्यतिक्रामति ।

एवं नैमित्तिकमक्षरत्रयप्रक्षेपं विधाय नित्यप्रयोगेऽपि तं विधत्ते—

अपि यदि समृद्धा इव ऋत्विजः स्युरिति ह स्माऽऽहाथ हैतज्जपेदेवेति ॥ ४६ ॥ इति ।

होत्रादय ऋत्विजो यद्यपि समृद्धा इव धनलाम्पट्यादिपूर्वोक्तवैकल्यरहिता एव स्युस्तथाऽप्येतत्पुरुष इत्यक्षरत्रयं स्तोत्रे जपेदेवेत्यैतरेयो मुनिराह स्म ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चदशाध्याये द्वितीयः खण्डः ॥२॥ (४६)[११७]।

———

पूर्वत्र यज्ञो ब्राह्मणेन च्छन्दोभिश्च सयुग्भूत्वा हव्यं वहतीत्युक्तम् । तत्र ब्राह्मणयुक्तो वक्तव्यविशेषोऽभिहितः ।

अथ च्छन्दःप्रयुक्तं विशेषमाह—

छन्दांसि वै देवेभ्यो हव्यमूढ्वा श्रान्तानि जघनार्धे यज्ञस्य तिष्ठन्ति यथाऽश्वो वाऽश्वतरो वोहिवांस्तिष्ठेदेवं तेभ्य एतं मैत्रावरुणं पशुपुरोळाशमनु देविका हवींषि निर्वपेत्, इति ।

गायत्र्यादीनि च्छन्दांसि देवार्थं हव्यवहनं कृत्वा श्रमं प्राप्य यज्ञस्य जघनार्धे पश्चिमभागे कचित्तूष्णीं तिष्ठन्ति । यथा लोके कश्चिदश्वो वा गर्दभाश्वसांकर्येण जातोऽश्वतरो वोहिवान्भारवहनं कृतवान्सन्दूरदेशे वहनेन श्रान्तस्तिष्ठेदेवमेतानि च्छन्दांस्यपि । तेभ्यः श्रान्तेभ्यः श्रमपरिहारार्थं हवींषि निर्वपेत् । देविका इति तेषां हविर्विशेषाणां नाम । कस्मिन्काले निर्वाप इति तदुच्यते । यज्ञस्यावसाने योऽयमनुबन्ध्याख्यः पशुबन्धस्तस्य पशोः संबन्धी मित्रावरुणदेवताको यः पुरोडाशस्तमनु तस्मिन्ननुष्ठिते पश्चान्निर्वपेत् ।

तत्र प्रथमं हविर्विधत्ते—

धात्रे पुरोळाशं द्वादश कपालं यो धाता स वषट्कारः, इति ।

धातृनाम्ने देवाय द्वादशसु कपालेषु संस्कृतं पुरोडाशं निर्वपेत् । योऽयं धातृनामको देवः स वषट्कारस्वरूपः । तेन पुरोडाशेन वषट्कारदेवतायाः श्रमोऽपगच्छति ।

द्वितीयं हविर्विधत्ते—

अनुमत्यै चरुं याऽनुमतिः सा गायत्री, इति ।

कलाहीने साऽनुमतिः पूर्णे राका निशाकर इत्यभिधानाच्चतुर्दशीमिश्रा पूर्णिमाऽनुमतिशब्दवाच्या । तदभिमानिन्या देवताया अपि तदेव नाम । तस्याश्चानुमतेर्गायत्रीरूपत्वात्तदीयः श्रमोऽपगच्छति ।

तृतीयं हविर्विधत्ते—

राकायै चरुं या राका सा त्रिष्टुप्, इति ।

पूर्ववद्व्याख्येयम् ।

चतुर्थपञ्चमे हविषी विधत्ते—

सिनीवाल्यै चरुं या सिनीवाली सा

जगती कुह्वै चरुं या कुहूः साऽनुष्टुप्, इति।

सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूरित्यमावास्याद्वैविध्यमभिहितम्। तदभिमानिदेवतायास्तदेव नामेति पूर्ववद्योजनीयम्। इतरेषां छन्दसां कथं श्रमपरिहार इत्याशङ्क्य सर्वेषामन्येषामुक्तच्छन्दोनुवर्तित्वात्तावतैव श्रान्तिपरिहार इत्यभिप्रेत्याऽऽह—

एतानि वाव सर्वाणि च्छन्दांसि गायत्रं
त्रैष्टुभं जागतमानुष्टुभमन्वन्यान्येतानि
हि यज्ञे प्रतमामिव क्रियन्ते, इति।

एतान्येव गायत्र्यादीनि चत्वारि सर्वच्छन्दोरूपाणि। अन्यानि तूष्णिगादीनि गायत्र्यादिकमनुसृत्यैव वर्तन्ते। यस्मादेतानि चत्वारि यज्ञप्रयोगे प्रतमामिव प्राचुर्यातिशयेनैव क्रियन्ते प्रयुज्यन्ते तस्मादेतदनुसारित्वमितरेषां युक्तम्।

उक्तार्थवेदनपूर्वमनुष्ठानं प्रशंसति—

एतैर्ह वा अस्य च्छन्दोभिर्यजतः सर्वै-
श्छन्दोभिरिष्टं भवति य एवं वेद, इति।

एतैर्गायत्र्यादिभिः सर्वैरुष्णिगादिभिः।

विद्वत्प्रसिद्ध्या छन्दांसि प्रशंसति—

तद्वै यदिदमाहुः सुधायां ह वै वाजी
सुहितो दधातीति च्छन्दांसि वै तत्सु-
धायां ह वा एनं छन्दांसि दधाति, इति।

वाजोऽन्नं हविर्लक्षणं तद्युक्तो ज्योतिष्टोमो वाजी। स च सुहितः सम्यगनुष्ठितः सुधायाममृते स्वर्गे दधाति यजमानं स्थापयतीति शेषः। अनेन प्रकारेण तद्वै तस्मिन्नेव यज्ञप्रतिपादके शास्त्रे यदिदं वचनमभिज्ञा आहुस्तत्तु च्छन्दांसि वै तद्वचनं यथोक्तगायत्र्यादिच्छन्दांस्येवाभिलक्ष्योक्तम्। यस्माच्छन्दांस्येनं यजमानं सुधायां स्वर्गे स्थापयन्ति तस्माच्छन्दोभिप्रायेणैतद्वचनं युक्तम्।

वेदनं प्रशंसति—

अननुध्यायिनं लोकं जयति य एवं वेद, इति।

मनसाऽनुध्यातुमनर्हमत्यपूर्वसुखोपेतं लोकं प्राप्नोति ।

अत्र कंचित्पूर्वपक्षमुद्भावयति—

तद्धैक आहुर्धातारमेव सर्वासां पुरस्तात्पुरस्तादा-
ज्येन परियजेत्तदासु सर्वासु मिथुनं दधातीति, इति ।

तद्ध तस्मिन्नेव च्छन्दसां श्रमपरिहारार्थे हविषां पञ्चके केचित्पूर्वपक्षिण एवमाहुः । सर्वासामनुमत्यादीनां स्त्रीदेवतानां पुरस्तात्पुरुषदेवतारूपं धातारमेवाऽऽज्यद्रव्येण परितो यजेत् । सर्वसंग्रहार्थं पुरस्तादिति वीप्सा । तत्तेन सर्वत्र धातृविषयप्रयोगेणाऽऽसु सर्वासु स्त्रीदेवतासु मिथुनं संपादयति ।

तमिमं पूर्वपक्षं दूषयति—

तदु वा आहुर्जामि वा एतद्यज्ञे क्रियते यत्र
समानीभ्यामृग्भ्यां समानेऽहन्यजतीति, इति ।

तदु वै तत्रैव पूर्वोक्तविषये केचिदभिज्ञा एवमाहुः । यत्र यस्मिन्प्रयोगे समानीभ्यामेकाविधाभ्यामृग्भ्यां समानेऽहन्नेकस्मिन्नेवाहनि यजति तदेतदनुष्ठानं यज्ञे जामि वै, आलस्यमेव क्रियते संपाद्यते । प्रयुक्तयोरेवर्चोः पुनः प्रयोगस्य चर्वितचर्वणसदृशत्वात् । धातृदेवताके पुरोडाशे धाता ददातु दाशुष इति पुरोनुवाक्या । धाता प्रजानामिति याज्या । तत्र यद्युपरितनानामपि चतुर्णां हविषां पुरस्तादाज्येन धातारं यजेत्तदानीमिदमृग्द्वयं पुनरपि चतुर्वारमावर्तनीयम् । तथा सति नीरसो यज्ञः फलं दातुं समर्थो न भवेदित्यर्थः ।

कथं तर्हि मिथुनसिद्धिः स्यादित्याशङ्क्य लौकिकदृष्टान्तेन तत्सिद्धिमुपपादयति—

यदिह वा अपि बह्व्य इव जायाः पतिर्वाव
तासां मिथुनं तद्यदासां धातारं पुरस्ताद्य-
जति तदासु सर्वासु मिथुनं दधाति, इति ।

यदिह वा यद्यपि लोके जाया बह्व्य इव बहुसंख्याका स्युस्तथाऽपि पतिर्वाव पतिरेक एव संस्तासां मिथुनं संपादयति । तथा सति यद्यासामनुमत्यादीनां पुरस्ताद्धातारं सकृदेव यजति तदानीमासु सर्वास्वनुमत्यादिषु स एक एव धाता मिथुनं संपादयति ।

वक्ष्यमाणैर्हविर्भिः सांकर्यशङ्कां वारयितुमुक्तार्थं विविच्य निगमयति—

इति नु देविकानाम् ॥ ४७ ॥ इति ।

अनेनोक्तप्रकारेण देविकाभिधानां देवतानां हवींष्युक्तानीति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चदशाध्याये तृतीयः खण्डः ॥ ३ ॥ (४७) [११८] ।

---

हविरन्तराणि प्रतिजानीते—

अथ देवीनाम्, इति ।

अथ देवीनामकानां देवतानां हवींषि निर्वपेदिति शेषः ।

तत्र प्रथमं हविर्विधत्ते—

सूर्याय पुरोळाशमेककपालं यः सूर्यः स धाता स उ एव वषट्कारः, इति ।

एककपालं निर्वपेदिति शेषः । सूर्यस्य पूर्वोक्तं धातृस्वरूपत्वतद्द्वारा वषट्काररूपत्वं चोपचर्य तदीयश्रमापनयो द्रष्टव्यः ।

उत्तराणि चत्वारि हवींषि विधत्ते—

दिवे चरुं या द्यौः साऽनुमतिः सो एव गायत्र्युषसे चरुं योषाः सा राका सो एव त्रिष्टुब्गवे चरुं या गौः सा सिनीवाली सो एव जगती पृथिव्यै चरुं या पृथिवी सा कुहूः सो एवानुष्टुप्, इति ।

प्रथमहविर्वद्व्याख्येयम् ।

एतेषां हविषां प्रशंसार्थं पूर्वोक्तमर्थवादं पुनरपि पठति—

एतानि वाव सर्वाणि च्छन्दांसि गायत्रं त्रैष्टुभं जागतमानुष्टुभमन्वन्यान्येतानि हि यज्ञे प्रतमामिव क्रियन्त एतैर्ह वा अस्य च्छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद तद्वै यदिदमाहुः सुधायां ह वै वाजी सुहितो दधातीति च्छन्दांसि वै तत्सुधायां ह वा एनं

छन्दांसि दधत्यननुध्यायिनं लोकं जयति य एवं वेद तद्धैक आहुः सूर्यमेव सर्वासां पुरस्तात्पुरस्तादाज्येन परियजेत्तदासु सर्वासु मिथुनं दधातीति तद्धु वा आहुर्जामि वा एतद्यज्ञे क्रियते यत्र समानीभ्यामृग्भ्यां समानेऽहन्यजतीति यदिह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं तद्यदासां सूर्यं पुरस्ताद्यजति तदासु सर्वासु मिथुनं दधाति, इति ।

धातारमित्येतस्य स्थाने सूर्यमित्येतावानेव विशेषः । अन्यत्सर्वं पूर्ववत् ।

देविकानाम्नां देवीनाम्नां च हविषां तुल्यं सामर्थ्यमभिप्रेत्य विकल्पं दर्शयति—

ता या इमास्ता अमूर्या अमूस्ता इमा अन्यतराभिर्वाव तं काममाप्नोति य एतासूभयीषु, इति ।

ता देवीनाम्ना प्रसिद्धा इमा इदानीमुक्ताः सूर्याय पुरोडाशमित्यादयो याः सन्ति ता अमूः प्राक्तनग्रन्थेनोक्ता धात्रे पुरोडाशमित्यादयो देविकाः । एवं देवीरुद्दिश्य देविकातादात्म्यमुक्तम् । अथ देविका उद्दिश्य देवीतादात्म्यमुच्यते । या अमूः पूर्वत्रोक्ता देविकाः सन्ति ता इमा इदानीमुक्ता देव्यः । एवमन्योन्यतादात्म्ये सति यः काम एतासूभयविधासु लभ्यते तं काममन्यतराभिर्वावैकविधाभिरेव प्राप्नोति । तस्माद्विकल्पेन प्रयोग इत्यर्थः ।

अथ नैमित्तिकं समुच्चयं विधत्ते—

ता उभयीर्गतश्रियः प्रजातिकामस्य संनिर्वपेत्, इति ।

अनूचानादीनां मध्ये कश्चिद्गतश्रीः । तथा च श्रुत्यन्तरे श्रूयते—'त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यः' इति । तादृशो गतश्रीर्यदि प्रजातिं प्रजोत्पादनसामर्थ्यं कामयते तदानीं तस्य ता देविका देवीश्चोभयीः संनिर्वपेत्समुच्चित्य निर्वपेत् ।

धनकामस्य समुच्चयं निषेधति—

न त्वेषिष्यमाणस्य[1], इति ।

1 क. ग. घ. ङ. च. छ. झ. ञ. ट. °ति—नेत्वे° ।

धनमपेक्षमाणस्य तु नैव संनिर्वपेत् । उभयविधानां समुच्चित्य निर्वापो न कार्यः ।

विपक्षे बाधकं दर्शयति—

यदेना एषिष्यमाणस्य संनिर्वपेदीश्वरो हास्य वित्ते देवा अरन्तोर्यद्वा अयमात्मनेऽलममंस्तेति, इति ।

वित्तमेषिष्यमाणस्य यद्येना उभयीः समुच्चित्य निर्वपेत्तदानीमस्य धनकामस्य वित्ते देवाः सर्वेऽप्यरन्तोरीश्वराः(?) अरन्तुमक्रीडितुं समर्था भवन्ति । एतदपेक्षितं वित्तं द्विषन्तीत्यर्थः । तत्र हेतुरुच्यते । यद्वै यस्मादेव करणादयं धनार्थी, आत्मने स्वार्थमेवालममंस्त संपूर्णं वित्तं मनसा ध्यातवान् । धनलोभेन यागादिषु प्रवृत्तत्वादेतदपेक्षिते धने देवानां द्वेषो युज्यते ।

धनकामस्य समुच्चयं निषिध्य प्रजाकामस्य पूर्वत्र विहितं समुच्चयमर्थवादेन प्रशंसति—

ता ह शुचिवृक्षो गौपालायनो वृद्धद्युम्नस्याऽऽभिप्रतारिणस्योभयीर्यज्ञे संनिरुवाप तस्य ह रथगृत्सं गाहमानं दृष्ट्वोवाचेत्थमहमस्य राजन्यस्य देविकाश्च देवीश्चोभयीर्यज्ञे सममादयं यदस्येत्थं रथगृत्सो गाहत इति चतुःषष्टिः कवचिनः शश्वद्धास्य ते पुत्रनप्तार आसुः ॥ ४८ ॥ इति ।

शुचयः शुद्धाः समीचीनपुष्पफला वृक्षा यस्य महर्षेराश्रमे सोऽयं शुचिवृक्षनामकः । सम्यक्तृणोदकप्रदानेन गोशुश्रूषां करोतीति गोपालनामा कश्चिदृषिस्तस्यापत्यं गौपालायनः पूर्वोक्तनामकः शुचिवृक्षः । वृद्धं प्रभूतं द्युम्नं धनं यस्य राज्ञः सोऽयं वृद्धद्युम्नः । अभितः शत्रून्प्रकर्षेण तरति निराकरोतीत्यभिप्रतारी कश्चिद्राजा । तस्य पुत्र आभिप्रतारिणः पूर्वोक्तो वृद्धद्युम्नः । तस्य राज्ञो यज्ञे देविका देवीश्चोभयीरित्थमनेन शास्त्रोक्तप्रकारेण सममादयं समुच्चित्य मादितवानस्मि समुच्चयानुष्ठानेन तत्तद्देवता हर्षितवानस्मि । तत्प्रसादादयं रथगृत्सो राजपुत्रः क्रीडार्थं जले गाहत इति । न केवलं शुचिवृक्षेण दृष्टो रथगृत्स एवैकः किंतु चतुःषष्टिसंख्याकाः शश्वत्कवचिनः सर्वदा युद्धार्थमु-

यतः शूरा अस्य वृद्धद्युम्नस्य राज्ञस्ते तथावयस्का एव पुत्राः पौत्राश्चाऽऽसुः ॥
इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-
भाष्ये पञ्चदशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (४८) [११९] ।

---

ज्योतिष्टोमस्तावत्सप्तसंस्थः समाप्तिभेदात्सप्तविधः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त संस्था इत्याश्वलायने-नाभिहितत्वात् । तत्राग्निष्टोमसाम्ना यज्ञायज्ञीयाख्येन यत्र समाप्तिः सोऽयं प्रथमरूपोऽग्निष्टोमः । स सर्वोऽपि पूर्वत्रोक्तः । अथोक्थ्यसंस्थारूपो ज्योति-ष्टोमो वक्तव्यः ।

तदर्थमाख्यायिकामाह—

अग्निष्टोमं वै देवा अश्रयन्तोक्थान्यसुरास्ते समा-वद्वीर्या एवाऽऽसन्न व्यावर्तन्त तान्भरद्वाज ऋषी-णामपश्यदिमे वा असुरा उक्थेषु श्रितास्तानेषां न कश्चन पश्यतीति सोऽग्निमुदह्वयत्, इति ।

यदा देवा अग्निष्टोममाश्रितवन्तस्तदानीमसुरा अप्युक्थनामकानि स्तोत्राणि शस्त्राणि चाऽऽश्रित्यावस्थिताः । ततस्ते देवाश्चासुराश्च यज्ञे तुल्यवीर्या एवाऽऽसन्न तु देवाः शौर्याधिक्येन व्यावृत्तिं प्राप्तास्तदानीमृषीणां मध्ये सूक्ष्मदर्शी भरद्वाजस्तानसुरान्रहस्युक्थपरानपश्यत् । दृष्ट्वा चैवमुवाच—इमे रहस्यवस्थिता असुरा उक्थेषु स्तोत्रशस्त्रेष्वाश्रितास्तानसुरानेषां देवानामृषीणां च मध्ये न कोऽपि पश्यतीति । तथोक्त्वा स भरद्वाजोऽसुरनिराकरणार्थं केनचिन्मन्त्रेणा-ग्निमुदह्वयदुच्चध्वनिनाऽऽह्वानं कृतवान् ।

तमिमं मन्त्रं दर्शयति—

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिर इति, इति ।

हेऽग्न एह्यु आगच्छैव । ते तव सुब्रवाणि शोभनं कार्यं कथयानि । इतरा देववाक्यार्थव्यतिरिक्ता गिरोऽसुरवाच इत्थेत्थमनेन प्रकारेण श्रुत्यन्तरा-दिति शेषः ।

अस्मिन्मन्त्र इतरशब्दार्थं दर्शयति—

असुर्या ह वा इतरा गिरः, इति ।

---

एह्यू षु ब्रवाणि तेऽग्न० — ६–१६–१६ ।

असुरेभ्यो हिता असुर्यास्ताश्च गिरो देववाक्यादितरा देवविरोधिन्य इत्यर्थः ।

तथाऽग्निवाक्यं दर्शयति—

सोऽग्निरुपोत्तिष्ठन्नब्रवीत्किंस्विदेव मह्य
कृशो दीर्घः पलितो वक्ष्यतीति, इति ।

भरद्वाजेनाऽऽहूतोऽग्निस्तत्समीपं प्रत्यागन्तुमुत्तिष्ठन्नेवमब्रवीत् । मह्यमग्नये सर्षिः किंस्विदेव किंनाम वक्ष्यतीति । कृशो दीर्घः पलित इत्यृषिविशेषणानि ।

तानि च स्पष्टी करोति—

भरद्वाजो ह वै कृशो दीर्घः पलित आस, इति ।

स्पष्टोऽर्थः ।

किंस्वित्पलितो वक्ष्यतीत्यग्निना पृष्टस्य भरद्वाजस्योत्तरं दर्शयति—

सोऽब्रवीदिमे वा असुरा उक्थेषु श्रिता-
स्तान्वो न कश्चन पश्यतीति, इति ।

स भरद्वाजोऽग्निं प्रत्येवमब्रवीत् । इमे वा इत्यादि पूर्ववद्व्याख्येयम् ।

अथोक्थस्तोत्रस्य साधनभूतं साकमश्वनामकं साम यदस्ति तदयं नाम निर्वक्ति—

तानग्निरश्वो भूत्वाऽभ्यत्यद्रवद्यदग्निरश्वो
भूत्वाऽभ्यत्यद्रवत्तत्साकमश्वं सामाभव-
त्तत्साकमश्वस्य साकमश्वत्वम्, इति ।

सोऽग्निर्भरद्वाजस्योत्तरं श्रुत्वा तत ऊर्ध्वं स्वयमश्वाकारो भूत्वा तानसुरानभिलक्ष्यात्यद्रवदतिशयेनागच्छत् । असुराणामुपरि वेगवन्तमात्मरूपमश्वं प्रवर्त्यासुरान्मारितवानित्यर्थः । यस्मात्स्वयमश्वाकारो भूत्वा तैरसुरैः साकं युद्धं कृत्वा जितवांस्तस्मादेतद्वृत्तान्तसूचनाय प्रवृत्तायामेह्यू षुब्रवाणि त इत्यादिकायामृच्युत्पन्नस्य साम्नः साकमश्वमिति नाम संपन्नम् ।

तस्य साम्न उक्थस्तोत्रनिष्पादकत्वं विधत्ते—

तदाहुः साकमश्वेनोक्थानि प्रणयेदप्रणीतानि वाव
तान्युक्थानि यान्यन्यत्र साकमश्वादिति, इति ।

तत्तत्र साकमश्वविषये प्रयोगाभिज्ञा आहुः। साकमश्वनामकेन साम्ना स्तोत्राण्युक्थनामकानि प्रणयेत्साकमश्वादन्यत्र। सामान्तरेण यान्युक्थानि स्तोत्राणि प्रणीयन्ते तान्यप्रणीतान्येव भवन्ति। तस्मादिदमेव सामोक्थस्तोत्रनिष्पादकम्।

पक्षान्तरं विधत्ते—

**प्रमंहिष्ठीयेन प्रणयेदित्याहुः प्रमंहिष्ठीयेन वै देवा असुरानुक्थेभ्यः प्राणुदन्त,** इति।

प्र मंहिष्ठाय गायतेत्यस्यामृच्युत्पन्नं साम प्रमंहिष्ठीयम्। तेन साम्नोक्थस्तोत्राणि निष्पादयेत्। उक्थेष्वाश्रितानासुरन्देवा एतेन साम्नोक्थेभ्यो निराकृतवन्तः।

उभयोः साम्नोरैच्छिकं विकल्पं दर्शयति—

**तत्प्राहैव प्रमंहिष्ठीयेन नयेत्प्र साकमश्वेन ॥४९॥** इति।

अहेत्ययं शब्दोऽन्यत्र निषेधार्थोऽप्यत्र विकल्पार्थः। निपातानामनेकार्थत्वात्। तान्युक्थस्तोत्राणि प्रमंहिष्ठीयेन साम्ना प्रणयेद्। अहैवाथवा साकमश्वेन साम्ना प्रणयेद् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चदशाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( ४९ ) [ १२० ]।

---

उक्थस्तोत्रेषु सामविशेषं विधायोक्थशस्त्रेषु सूक्तं विधातुमादौ मैत्रावरुणशस्त्रे किंचित्सूक्तं विधत्ते—

**ते वा असुरा मैत्रावरुणस्योक्थमश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्वरुणस्तस्मादैन्द्रावरुणं मैत्रावरुणस्तृतीयसवने शंसतीन्द्रश्च हि तान्वरुणश्च ततो नुदेताम्,** इति।

उक्थ्यस्य क्रतोरग्निष्टोमविकृतित्वादातिदिष्टमग्निष्टोमप्रयोगमनुष्ठाय तत ऊर्ध्वमुक्थ्यपर्यायास्त्रयोऽनुष्ठेयाः। तथा चाऽऽपस्तम्ब आह—'उक्थ्यश्चेदग्निष्टोमसमवसायाथ त्रिभ्यश्चमसगणेभ्यो राजानमतिरेचयति' इति। तत्र प्रथमे चमसगणे

---

प्र मंहिष्ठाय गायत०—८-१०३-८।

मैत्रावरुणस्य यच्छस्त्रमस्ति, उक्थ्य(क्थ)स्तोत्रेषु साम्ना निराकृतास्त एवासुरा इदं मैत्रावरुणशस्त्रमश्रयन्त। तदानीं तत्रावस्थितः स इन्द्र इतरदेवान्प्रत्येवमब्रवीत्। असुराणामपनोदने मम सहायोऽपेक्षितस्ततो हे देवा युष्माकं मध्ये कश्चाहं चेमानसुरानितो मैत्रावरुणशस्त्रान्नोत्स्यावहा अपनोदं करिष्याव इति। देवेष्ववस्थितो वरुणोऽहं चेत्यब्रवीद्ध इन्द्र त्वं चाहं चेत्यर्थः। यस्मादेवं तस्मादुभयोर्मेलनेन तेषामसुराणामपनोदार्थमैन्द्रावरुणं सूक्तं तृतीयसवने मैत्रावरुणनामक ऋत्विक्शंसेत्। इन्द्रावरुणा युवमध्वराय न इत्येतद्दशर्चं सूक्तमैन्द्रावरुणम्। तेन तुष्ट इन्द्रश्च वरुणश्च तानसुरांस्ततः शस्त्रादपनुदेतां निराकुर्याताम्।

द्वितीये चमसगणे किंचित्सूक्तद्वयं विधत्ते—

> ते वै ततोऽपहता असुरा ब्राह्मणाच्छंसिन उक्थमश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्बृहस्पतिस्तस्मादैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसतीन्द्रश्च हि तान्बृहस्पतिश्च ततो नुदेताम्, इति।

ततो मैत्रावरुणशस्त्रान्निराकृता असुरा ब्राह्मणाच्छंसिनः शस्त्रमाश्रितवन्तः। उदप्रुतो न वयो रक्षमाणा इत्येद्बृहस्पतिदेवताकं द्वादशर्चं सूक्तम्। अच्छाम इन्द्रं मतयः स्वर्विद इत्येकादशर्चमैन्द्रं सूक्तम्। तदुभयं मिलितं सदैन्द्राबार्हस्पत्यं संपद्यते। तदेतद्ब्राह्मणाच्छंसी ब्रूयात्। अन्यत्पूर्ववद्व्याख्येयम्।

तृतीये चमसगणे सूक्तं विधत्ते—

> ते वै ततोऽपहता असुरा अच्छावाकस्योक्थमश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्विष्णुस्तस्मादैन्द्रावैष्णवमच्छावाकस्तृतीयसवने शंसतीन्द्रश्च हि तान्विष्णुश्च ततो नुदेताम्, इति।

सं वां कर्मणा समिषेत्यष्टर्चमैन्द्रावैष्णवं सूक्तम्। अन्यत्पूर्ववद्व्याख्येयम्।

---

इन्द्रावरुणा युवमध्वराय०—७-८२-१। उदप्रुतो न वयो रक्ष०—१०-६८-१। अच्छा म इन्द्रं मतयः०—१०-४३-१। सं वां कर्मणा समिषा हिनोमि०—६-६९-१।

सूक्तानां द्विदेवताकत्वं प्रशंसति—

द्वंद्वमिन्द्रेण देवताः शस्यन्ते द्वंद्वं वै मिथुनं तस्माद्द्वंद्वान्मिथुनं प्रजायते प्रजात्यै, इति ।

इन्द्रेण सह द्वंद्वं युग्मं भूत्वा वरुणबृहस्पतिविष्णुदेवताः क्रमेण शस्यन्ते । द्वंद्वं च लोके स्त्रीपुरुषरूपं मिथुनं तादृशान्मिथुनादपत्यरूपं मिथुनं प्रजायते । ततो द्वंद्वशंसनं यजमानस्य प्रजात्यै भवति ।

वेदनं प्रशंसति—

प्रजायते प्रजया पशुभिर्य एवं वेद, इति ।

शस्त्रिणां त्रयाणां होत्रकाणां सूक्तानि विधाय पोतुर्नेष्टुश्च मन्त्रान्तराणि विधत्ते—

अथ हैते पोत्रीयाश्च नेष्ट्रीयाश्च चत्वार ऋतुयाजाः षळृचः सा विराड्दशिनी तद्विराजि यज्ञं दशिन्यां प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति ॥ ५० ॥ इति ।

प्रैषग्रन्थे पञ्चमे सूक्ते होता यक्षदित्यादिकौ द्वितीयाष्टमौ मन्त्रौ पोतुर्द्वावृतुयाजौ । तथा तत्रैव तृतीयनवमौ मन्त्रौ नेष्टुर्द्वावृतुयाजौ । इत्येवं चत्वार ऋतुयाजास्ते मिलित्वा पोतृसंबन्धान्नेष्टृसंबन्धाच्च पोत्रीया नेष्ट्रीयाश्च भवन्ति । तथा प्रस्थितयाज्याः पोतुस्तिस्र ऋचो नेष्टुश्च तिस्र ऋच इत्येवं षळृचो भवन्ति । तदेतन्मन्त्रदशकं प्रशंसति—सा विराडित्यादिना । सा पूर्वोक्ता मन्त्रसमष्टिर्दशिनी दशसंख्यायुक्ता सती विराट्छन्दः संपद्यते । दशाक्षरा विराडिति श्रुत्यन्तरात् । तत्तेन दशसंप्रयोगेण दशिन्यां दशसंख्योपेतायां विराजि यज्ञमृत्विजः प्रतिष्ठापयन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चदशाध्याये षष्ठः खण्डः ॥ ६ ॥ (५०) [१२१] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

इत्यैतरेयब्राह्मणे तृतीयपञ्चिका समाप्ता ॥ ३ ॥

---

( पञ्चिकाङ्काः—३ । अध्यायाङ्काः— १५ । खण्डाङ्काः १२१ ) ।

## अथ चतुर्थपञ्चिकाप्रारम्भः ।

### षोडशोऽध्यायः ।

संस्थेष्टीनां वाग्यमश्चर्त्विजां च
यागादेर्वा देविकानां विशेषाः ॥
संस्थोक्थ्यस्य स्तोत्रशस्त्रप्रक्लृप्तिः ।
शस्त्राण्याहुः शस्त्रिणां होत्रकाणाम् ॥

ज्योतिष्टोमभेद उक्थ्यः समापितः । अथ षोडश्युच्यते । तद्विषयं शंसनं विधत्ते—

**देवा वै प्रथमेनाह्नेन्द्राय वज्रं समभरंस्तं द्वितीये-नाह्नाऽसिञ्चंस्तं तृतीयेनाह्ना प्रायच्छंस्तं चतुर्थेऽ-हन्प्राहरत्तस्माच्चतुर्थेऽहन्षोळशिनं शंसति, इति ।**

अग्निष्टोमोक्थ्यादिसंस्थाविशेषः स्वतन्त्रः क्रतुत्वाद्यथा पृथगनुष्ठातुं योग्यस्तथा षोडशी स्वतन्त्रः क्रतुः । तथा च शाखान्तरे पठन्ति—'न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडशꣳ स्तोत्रꣳ षोडशꣳ शस्त्रं तेन षोडशी' इति । तथा सत्ययं संस्थाविशेषः पृष्ठ्यषडहचतुर्थेऽहनि प्रयुज्यते । अतस्तत्रैवैतच्छंसनविधानं देवाः पुरा पृष्ठ्यषडहे प्रथमेनाह्ना प्रथमदिवसनिष्पाद्येन सोमप्रयोगेणेन्द्रार्थं वज्रं समभरन्संपादितवन्तः । अत्र सर्वत्राहःशब्दोऽह्ना निष्पाद्य सोमप्रयोगमभिधत्ते । तत्र संपादितं वज्रं द्वितीयेनाह्नाऽसिञ्चन् । सेचनं नाम लोहमयानां शङ्कुकुठारादीनां तीक्ष्णत्वाय दार्ढ्याय चाग्नौ प्रताप्य यथोचितं नीरे स्थापनम् । तदिदं सेचनं वज्रे कृतवन्तः । कृत्वा च तृतीयेनाह्ना तं वज्रमिन्द्राय प्रायच्छन्दत्तवन्तः । स चेन्द्रस्तं वज्रं चतुर्थेऽहनि शत्रोरुपरि प्राहरत् । तस्मात्पृष्ठ्यषडहस्य चतुर्थाहःप्रयोगे षोळशिनं शस्त्रं शंसेत् । असावि सोम इन्द्र ते [ १-८४-१] इत्यादिकं षोळश्याख्यं शस्त्रम् । तथा चाऽऽश्वलायन आह—अथ षोळश्यसावि सोम इन्द्र त इति स्तोत्रियानुरूपाविति ।

षोळशिशंसनं प्रशंसति—

**वज्रो वा एष यत्षोळशी तद्यच्चतुर्थेऽहन्षोळशिनं**

---

१ क. झ. षोडशि° ।

शंसति वज्रमेव तत्प्रहरति द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै, इति ।

षोळशिनो वज्रस्वरूपत्वाद्यः पुमानस्य यजमानस्य स्तृत्यो हिंसनीयस्तस्मै स्तर्तवै तस्य हिंसार्थं वधहेतुं वज्रमेव भ्रातृव्याय प्रहरति ।

तस्य शस्त्रस्य कालं विधत्ते—

वज्रो वै षोळशी पशव उक्थानि तं परस्तादुक्थानां पर्यस्य शंसति, इति ।

यथा पूर्वत्राग्निष्टोमप्रयुक्तानां द्वादशशस्त्राणामुपरि त्रीण्युक्थ्यशस्त्राणि प्रयुक्तानि तथाऽत्रापि त्रयाणामुक्थशस्त्राणां परस्तादुपरि पर्यस्य षोळशिनमेव शंसेत् । उक्थानां पशुरूपत्वात्षोळशिनो वज्ररूपत्वाच्चायं क्रम उपपन्नः ।

तामेतामुपपत्तिं प्रकटयति—

तं यत्परस्तादुक्थानां पर्यस्य शंसति वज्रेणैव तत्षोळशिना पशून्परिगच्छति तस्मात्पशवो वज्रेणैव षोळशिना परिगता मनुष्यानभ्युपावर्तन्ते तस्मादश्वो वा पुरुषो वा गौर्वा हस्ती वा परिगत एव स्वयमात्मनेऽत एव वाचाऽभिषिद्ध उपावर्तते वज्रमेव षोळशिनं पश्यन्वज्रेणैव षोळशिना परिगतो वाग्घि वज्रो वाक्षोळशी, इति ।

तं षोळशिनं यद्यस्मात्कारणादुक्थशस्त्राणां परस्तात्पर्यस्य शंसति तत्तेन शंसनेन षोळशिरूपेण वज्रेणैवोक्तरूपान्पशून्परिगच्छति परितो नियमेन याति । तस्माल्लोकेऽप्यरण्ये संचारार्थं गताः पशवः षोळशिना वज्रेणैव नियमितत्वात्सायंकाले मनुष्यानभिलक्ष्य तत्तद्गृहेषूपावर्तन्ते । अन्यथा तस्मादरण्यादरण्यान्तरमेव गच्छेयुः । न केवलं तृणचरणार्थमरण्यगतानां सायंकाले पुनरागमनाय वज्ररूपेण नियमितत्वं किं तर्हि ग्रामेष्वपि । तस्मात्षोळशिवज्रनियमितत्वादश्वपुरुषगोहस्त्यादीनामन्यतमः स्वयमेव परप्रेरणामन्तरेणैव परिगतो नियमित आत्मना[3](?) स्वयं बन्धनाय तत्स्थाने समागच्छति । किं

---

१ क. झ. षोडशि° । २ क. ट. °नमवशं° । ख. °नमविहतं शं° । ३ ख. °त्मतः स्व° ।

चात एव षोळशिवज्रनियमितत्वादेव वाचा शीघ्रमागच्छेत्यादिवाक्येनाभिषिद्धोऽभितो बद्धः पुरुषो वर्तते। यथा रज्ज्वा बद्धो बलीवर्द आनीयमान आगच्छति तद्वद्वाचा बद्धः पुरुषः। अत एवारण्यकाण्डे वक्ष्यति—'तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्' इति। वाङ्मात्रेणाऽऽगमने कारणमुच्यते। षोळशिनं वाग्वज्ररूपमेव पश्यन्षोळशिना वज्रेणैव नियमितो भवति तद्द्वारा तस्य वज्रत्वम्। षोळशी च वाग्रूपैः सूक्तादिभिर्निष्पन्नत्वात्स्वयमपि वाग्रूपो भवति। वाचश्च वज्रत्वं लोके प्रसिद्धम्। राजादीनां भर्त्सनादौ वज्रप्रहारेणैव चित्ते व्यथोदयात्। तदेवं सर्वनियामकत्वात्षोळशिनः प्रशस्तत्वं सिद्धम्। यदुक्तं पुरस्तादुक्थानां पर्यस्य शंसतीति तत्रोक्थशस्त्रेभ्य उत्तरकालावस्थानमेव पर्यस्येतिशब्देन विवक्षितमिति व्याख्यातमथवोत्तरकालस्य परस्तादितिशब्देनैव सिद्धत्वात्पर्यस्येतिशब्देन शस्त्रगतानामृचामध्ययनपाठाद्विपर्यासोऽभिधीयते। द्विविधं षोळशिशस्त्रं विहृतमविहृतं च। तत्राविहृतं नामाध्ययनक्रमेणैव शंसनम्। विहृतं तु ऋचां परस्परव्यतिषङ्गः। स त्वाश्वलायनेन दर्शितः—'ऊर्ध्वं स्तोत्रियानुरूपाभ्यां तदेव शस्यं विहरेत्पादान्व्यवधायार्धर्चशः शंसेत्पूर्वासां पूर्वाणि पदानि गायत्र्यः पङ्क्तिभिः पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रणुयात्' इति। तदेतदुदाहृत्य प्रदर्श्यते—'इमा धाना घृतस्नुवो हरी इहोप वक्षतः। इन्द्रं सुखतमे रथे' [१-१६-२] इत्येषा गायत्री। 'सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि। प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी [१-८२-३] योऽयमध्ययनपाठः सोऽविहृतः। विहृतपाठस्तूच्यते। इमा धाना घृतस्नुवः सुसंदृशं त्वा वयम्। हरी इहोपवक्षतो मघवन्वन्दिषीमहीमिन्द्रं सुखतमे रथे प्र नूनं पूर्णवन्धुरः। स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरीमिति। अनेन प्रकारेण विपर्यस्य शंसेत्।

अथ प्रश्नोत्तराभ्यां षोळशिशब्दं निर्वक्ति—

**तदाहुः किं षोळशिनः षोळशित्वमिति षोळशः स्तोत्राणां षोळशः शस्त्राणां षोळशभिरक्षरैरादत्ते षोळशभिः प्रणौति षोळशपदां निविदं दधाति तत्षोळशिनः षोळशित्वम्, इति।**

---

१ क. झ. ट. षोडशि°। २ क. झ. षोडशि°। ३ क. झ. ट. तदा त°। ४ क. झ. षोडशी। ५ क. झ. ट. °त्रोक्थ्यश°। ६ क. झ. षोडशि°।

षोळशिशब्दो ग्रहविशेषं स्तोत्रविशेषं शस्त्रविशेषं चाभिधत्ते । तेषामेकैक-स्वरूपवर्तां षोळशिशब्दवाच्यत्वमयुक्तम् । तच्छब्दप्रवृत्तौ निमित्तान्तरं तु न पश्याम इति ब्रह्मवादिनामभिप्रायः । षोडशसंख्यायुक्तत्वात्षोळशित्वमित्युत्तरम् । तत्र कथमिति तदुच्यते । अग्निष्टोमसंस्थो ज्योतिष्टोमो द्वादशशस्त्रोपेतः । तथा च शाखान्तरे श्रूयते—'द्वादशाग्निष्टोमस्य स्तोत्राणि' इति । तद्गर्भित उक्थ्यसंस्थस्त्रिभिः स्तोत्रैरतिरिच्यते । तस्मात्पञ्चदश स्तोत्राणि भवन्ति । तद्गर्भितः षोळशिसंस्थ एकेन स्तोत्रेणातिरिच्यते । ततः स्तोत्राणां मध्य एतत्स्तोत्रप्रयोगः षोडशसंख्यापूरको भवति । तथा शस्त्राणां मध्येऽप्येतच्छस्त्रप्रयोगः षोडशसंख्यापूरकः । किं चास्मिञ्छस्त्रे होत्रा संपादिताया अनुष्टुभः पूर्वार्धगतानि षोडशाक्षराण्युच्चार्यावस्यति । उत्तरार्धगतानि षोडशाक्षराण्युच्चार्य प्रणौति प्रणवमुच्चारयति । किं चास्य मदे जरितरित्यादिका षोडशपदोपेता निविच्छस्त्रमध्ये प्रक्षिप्यते । अतो बहुधा षोडशसंख्यायोगादयं प्रयोगः षोळशिनामोपेतः ।

प्रकारान्तरेण षोळशिनं प्रशंसति—

द्वे वा अक्षरे अतिरिच्येते षोळशि-
नोऽनुष्टुभमभिसंपन्नस्य वाचो वाव
तौ स्तनौ सत्यानृते वाव ते, इति ।

योऽयं षोळशी सोऽयं द्व्यक्षराधिकामनुष्टुभं यदा संप्राप्तो भवति तदानीं द्वे एवाक्षरे अधिके भवतः । तथा हि सूत्रकारो विहृतस्येत्युपक्रम्य शाखान्तरीया इन्द्र जुषस्वेत्यादिका ऋचः पठितवान् । तस्याः पूर्वस्मिन्नर्धर्चे षोडशाक्षराण्युत्तरार्धर्चेऽष्टादश ततोऽक्षरद्वयाधिक्यं वाग्वा अनुष्टुबिति श्रुत्यन्तरे । सा वाचोऽनुष्टुबवयवत्वात्तदात्मिकाया वाग्देवतायाः स्त्रीरूपाया अधिकाक्षररूपौ स्तनौ संपद्येते । यदेतल्लोके सत्यवदनं यच्चानृतवदनं तदुभयमपि वाचः स्तनरूपमतोऽधिकाक्षरायाः सत्यानृतरूपत्वम् ।

उक्तार्थवेदनं प्रशंसति—

अवत्येनं सत्यं नैनमनृतं हिनस्ति
य एवं वेद ॥ १ ॥ इति ।

---

१ ख. °वत्त्वात्षोळ° । २ क. षोडषि° । ३ क. झ. ट. षोडशि° । ४ क. झ. ट. षोडसि° ।

एनं वेदितारं सत्यवाक्पालयति। सुकृतोत्पादकत्वात्। अनृतवाग्न हिनस्ति। दुरितस्यानुदयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षोडशाध्याये प्रथमः खण्डः ॥ १ ॥ [१२२]।

———

षोळशिशस्त्रं विधाय षोळशिस्तोत्रनिष्पादकं सामविशेषं विधत्ते—

गौरिवीतं षोळशिसाम कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं गौरिवीतं तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान्गौरिवीतं षोळशिसाम कुरुते, इति।

केनाचिन्महर्षिणा गौरिवीतनाम्ना दृष्टत्वात्सामापि गौरिवीतनामकम्। तत्तु अभि प्रगोपतिं गिरा [ ८–६९–४ ] इत्यस्यामृच्युत्पन्नं तदत्र षोळशिस्तोत्रे साम कुर्वीत। तेजः शरीरकान्तिः। ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः।

सामान्तरं विधत्ते—

नानदं षोळशिसाम कर्तव्यमित्याहुरिन्द्रो वै वृत्राय वज्रमुदयच्छत्तमस्मै प्राहरत्तमभ्यहनत्सोऽभिहतो व्यनदद्यद्व्यनदत्तन्नानदं सामाभवत्तन्नानदस्य नानदत्वमभ्रातृव्यं वा एतद्भ्रातृव्यहा साम यन्नानदम्, इति।

नानदाख्यं किंचित्साम तत्तु प्रत्यस्मै पिपीषत इत्यस्यामृच्युत्पन्नम्। तदेतत्साम षोळशिस्तोत्रे कर्तव्यमित्यन्ये केचिदाहुः। तस्य नानदत्वं कथमिति तदुच्यते। वज्रप्रहारेणाभिहतो वृत्रो व्यनदद्विशिष्टमुच्चैर्ध्वनिं नानदं कृतवान्। स च ध्वनिर्नानदसामाकारेण संपन्नः। ततो नानदोत्पन्नत्वान्नानदमिति नाम। तत्साम भ्रातृव्यराहितम्। तत्परिशीलनवन्तः सर्वेऽपि मैत्रीमेव प्रतिपद्यन्ते न तु कश्चिदपि द्वेषम्। किं चैतत्साम भ्रातृव्यहा पूर्वं विद्यमानस्य शत्रोर्घातकम्।

———

१ ख. तदेतत्षोळं। २ ख. नादं।

वेदनं प्रशंसति—

अभ्रातृव्यो भ्रातृव्यहा भवति य एवं
विद्वान्नानदं षोळशिसाम कुरुते, इति ।

गौरिवीतं नानदं वा सामेत्येवं पक्षद्वयं संपन्नम् । तयोः पक्षयोः शस्त्रविशेष-व्यवस्थां विधत्ते—

तद्यदि नानदं कुर्युरविहृतः षोळशी शंस्तव्योऽ-
विहृतासु हि तासु स्तुवते यदि गौरिवीतं विहृतः
षोळशी शंस्तव्यो विहृतासु हि तासु स्तुवते, इति ।

अविहृतरूपः परस्परव्यतिषङ्गरहितो यथाधीतपाठः सोऽयं नानदपक्षे कर्तव्यः । यतः सामगा अप्यविहृतासु व्यतिषङ्गरहितास्वृक्षु नानदसाम्ना स्तुवते तस्मादविहृतत्वमेवात्र योग्यम् । यथा वाव स्तोत्रमेवं शस्त्रमिति न्यायात् । गौरिवीतपक्षे शस्त्रमपि परस्परव्यतिषङ्गेण विहृतं पठनीयम् । सामगै-र्विहृतासु व्यतिषक्तास्वृक्षु गौरिवीतसाम्ना स्तूयमानत्वात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्म-णभाष्ये षोडशाध्याये द्वितीयः खण्डः ॥ २ ॥ [१२३] ।

---

अथ विहरणप्रकारं विधत्ते—

अथातश्छन्दांस्येव व्यतिषजत्या त्वा वहन्तु हरय
उपो षु शृणुही गिर इति गायत्रीश्च पङ्क्तीश्च
व्यतिषजति गायत्रो वै पुरुषः पाङ्क्ताः पशवः
पुरुषमेव तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठा-
पयति यदु गायत्री च पङ्क्तिश्च ते द्वे अनुष्टुभौ
तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति, इति ।

अथ सामद्वयविधानानन्तरमतो गौरिवीतपक्षे विहृतस्यापेक्षितत्वात्तदुच्यत इति शेषः । स्वस्वस्थानाद्विभज्यान्यत्र नयनं विहरणम् । तच्च समानच्छन्द-स्कयोरेव भवति । तद्व्यावृत्त्यर्थमुच्यते—छन्दांस्येव व्यतिषजतीति । परस्पर-विलक्षणानि च्छन्दांस्येव व्यतिषक्तानि कुर्यादिति । तत्र कस्य च्छन्दसः

---

आ त्वा वहन्तु हरयः०—१–१६–१ । उपो षु शृणुही गिरः०—१–८२–१ ।

केनच्छन्दसा सह व्यतिषङ्ग इति तदेतदुदाहरणपूर्वकं प्रदर्श्यते। आ त्वा वह-न्त्वित्यादिकास्तिस्र ऋचो गायत्रीछन्दस्काः। उपो ष्वित्येका। सुसंदृशमिति द्वे एतास्तिस्रः पङ्क्तिच्छन्दस्कास्ता उभयीः परस्परं व्यतिषजन्मिश्रयेत्। गायत्र्याः प्रथमपादमुक्त्वा तेन सह पङ्क्तेः प्रथमपादमुच्चारयेत्। सोऽयं प्रकारोऽस्माभिः पूर्वमेवोदाहृतः। लोके पुरुषो गायत्रः। उपनीतेन गायत्र्या अनुष्ठेयत्वात्। पश-वश्च पाङ्क्ताश्चतुर्भिः पादैर्मुखेन च पञ्चसंख्योपेतत्वात्। तत्र गायत्रीपङ्क्त्यो-र्मेलनेन पुरुषस्य पशूनां च मेलनं भवति। अतः पुरुषं पशुषु प्रतिष्ठापयति। किं च यद्रूपेणैव कारणेन गायत्री च पङ्क्तिश्च मिलिते सत्ये(त्यौ) ते द्वे अनु-ष्टुभौ संपद्येते। गायत्र्यास्त्रिपादत्वात्पङ्क्तेश्च पञ्चपादत्वान्मिलित्वाऽष्टानां पा-दानां विद्यमानत्वात्तेनो तेनैव मेलनेन कारणेनायं पुरुषो वाग्रूपादनुष्टुब्रूपाद्वज्र-रूपाच्च नैति कदाचिदपि वियुक्तो न भवति। शस्त्रस्याक्षरात्मकत्वेन वाग्रूपत्व-मष्टपादसंपत्तावनुष्टुब्द्वयरूपत्वम्। षोडशिनः पश्वादिनियामकत्वेन वज्ररूपत्वमतो नास्ति त्रिविधवियोगः।

छन्दोन्तरयोर्विहरणं विधत्ते—

यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजत्यौष्णिहो वै पुरुषो बार्हताः पशवः पुरुषमेव तत्पशुभिर्व्यतिषजति पशुषु प्रति-ष्ठापयति यदुष्णिक्च बृहती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति, इति।

यदिन्द्र इत्यादिकास्तिस्र उष्णिक्छन्दस्का ऋचोऽयं ते अस्त्वित्यादिका-स्तिस्रो बृहतीछन्दस्काः। उपनीतः पुरुषो व्याहृत्यक्षरचतुष्टयोपेतां चतुर्विंश-त्यक्षरां गायत्रीं व्यतिषजत्युष्णिक्चाष्टाविंशत्यक्षरा। ततः पुरुषस्यौष्णिहत्वम्। पशूनां बार्हतत्वं शाखान्तरे श्रुतम्—'छन्दांसि पशुष्वाजिमयुस्तान्बृहत्युदज-यत्तस्माद्बार्हताः पशव उच्यन्ते' इति। बृहती च षट्त्रिंशदक्षरा तस्या उष्णिग्योगे सति चतुःषष्ट्यक्षरसंपत्तेरनुष्टुब्द्वयम्।

छन्दोन्तरयोर्विहरणं विधत्ते—

आधूर्ष्वस्मै ब्रह्मन्वीर ब्रह्मकृतिं जुषाण इति

---

यदिन्द्र पृतनाज्ये० —८–१२–२९। अयं ते अस्तु हर्यतः०—३–४४–१। आधूर्ष्वस्मै दधात०—७–३४–४। ब्रह्मन्वीर ब्रह्मकृतिं०—७–२९–२।

द्विपदां च त्रिष्टुभं च व्यतिषजति द्विपाद्वै पुरुषो वीर्यं त्रिष्टुप्पुरुषमेव तद्वीर्येण व्यतिषजाति वीर्ये प्रतिष्ठापयति तस्मात्पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्यवत्तमो यद्नु द्विपदा च विंशत्यक्षरा त्रिष्टुप् च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति, इति ।

आधूर्ष्वस्मा इत्येषा पादद्वयोपेता । ब्रह्मन्वीरेत्येषा त्रिष्टुप्छन्दस्का । पुरुषस्य द्विपात्त्वं प्रसिद्धम् । त्रिष्टुभो वीर्यहेतुत्वाद्वीर्यत्वम् । तस्मादुभयमेलनेन पुरुषं वीर्ये प्रतिष्ठापयति । तस्माल्लोकेऽपि सर्वेषां द्विपदां चतुष्पदानां पशूनां मध्ये पुरुषस्य शक्त्याधिक्यात्पुरुषो वीर्ये प्रतिष्ठितः । द्विपदा चेयं विंशत्यक्षराऽष्टाक्षरे प्रथमे पादे संयुक्ताक्षरयोर्विभागेन पञ्चाक्षरत्वे सति दशसंख्यापूर्त्तेः । एवं पञ्चाक्षरैस्त्रिष्टुभश्चतुर्णां पादानां संधानं त्रिष्टुप्चत्वारिंशदक्षरा मिलित्वा चतुःषष्टिसंपत्त्याऽनुष्टुब्द्वयं संभवति ।

छन्दोन्तरयोर्विहरणं विधत्ते—

एष ब्रह्मा प्र ते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यतिजषाति द्विपाद्वै पुरुषो जागताः पशवः पुरुषमेव तत्पशुभिर्व्यतिषजाति पशुषु प्रतिष्ठापयाति तस्मात्पुरुषः पशुषु प्रतिष्ठितोऽत्ति चैनानधि च तिष्ठति वशे चास्य यद्नु द्विपदा च षोळशाक्षरा जगती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति, इति ।

एष ब्रह्मेत्यादिकास्तिस्रो द्विपदाः । प्र ते मह इत्यादिकास्तिस्रो जगत्यः । पशूनां जागतत्वं शाखान्तरे सोमाहरणकथायां श्रूयते–सा पशुभिश्च दीक्षया चाऽऽगच्छत्तस्माज्जगती छन्दसां पशव्यतमा' इति । यस्मान्मेलनेन पुरुषं पशुषु प्रतिष्ठापयाति तस्मादयं पुरुषः पशुषु प्रतिष्ठितः । तस्मिन्क्षीरादिकमत्ति चैनान्पशूनधितिष्ठति नियमयति च । तस्मादस्य पुरुषस्य वशे सर्वे पशवो

प्र ते महे विदथे शंसिषं०—१०–९६–१ ।

वर्तन्ते। यद्यस्मादेव कारणादियं द्विपदा षोडशाक्षरा। जगती चाष्टाचत्वारिंशदक्षरा ततो मिलित्वा चतुःषष्टित्वादनुष्टुब्द्वयत्वम्।

छन्दोऽन्तरसंयुक्ताः काश्चिदृचो विधत्ते—

त्रिकद्रुकेषु महिषो यवाशिरम्। प्रोष्वस्मै पुरोरथमित्यतिच्छन्दसः शंसति च्छन्दसां वै यो रसोऽत्यक्षरत्सोऽतिच्छन्दसमभ्यत्यक्षरत्तदतिच्छन्दसोऽतिच्छन्दस्त्वं सर्वेभ्यो वा एष च्छन्दोभ्यः संनिर्मितो यत्षोळशी तद्यदतिच्छन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः संनिर्मिमीते, इति।

त्रिकद्रुकेष्विति तृचे यास्तिस्रः ऋचस्ता अतिच्छन्दोयुक्तास्तथा प्रोष्वस्मा इति तृचोऽपि ता उभयीः शंसेत्। छन्दसां गायत्र्यादीनां यो रसः सारोऽत्यक्षरदतिशयेनास्रवत्तदानीं स रसोऽतिच्छन्दोरसमभिलक्ष्यातिशयेनास्रवत्। तस्माच्छन्दोरसस्यातिशयेन स्रवणादतिच्छन्दस्त्वं नाम संपन्नम्। षोडशी चोक्तप्रकारेण सर्वेभ्यश्छन्दोभ्यः सम्यङ्निर्मितस्तस्मादतिच्छन्दसां शंसने नायं होतैनं यजमानं सर्वच्छन्दोभ्यो निर्मिमीते।

वेदनं प्रशंसति—

सर्वेभ्यश्छन्दोभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद॥ ३॥ इति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षोडशाध्याये तृतीयः खण्डः॥ ३॥ [१२४]।

---

अथ पूर्वोक्तानामतिच्छन्दसामनुष्टुप्संपादनाय मेलनं विधत्ते—

महानाम्नीनामुपसर्गानुपसृजति, इति।

विदा मघवन्नित्यस्मिन्ननुवाके प्रोक्ता ऋचो महानाम्न्यस्तासां संबन्धिन उपसर्गाः पञ्चविधाः। ते चाऽऽश्वलायनेन दर्शिताः–'प्रचेतन प्रचेतयाऽऽयाहि पिब मत्स्व। क्रतुश्छन्द ऋतं बृहत्सुम्न आधेहि नो वसवित्यनुष्टुप्' इति। तत्र प्रचेतनेत्येकः प्रथम उपसर्गः। प्रचेतयेति द्वितीयस्तावुभावपि द्वितीयस्यां महा-

---

त्रिकद्रुकेषु महिषो०— १–२२–१। प्रोष्वस्मै पुरोरथ०–१०–१३३–१।

नाम्न्यामाम्नातौ । आयाहि पिब मत्स्वेति तृतीय उपसर्गस्तृतीयस्यां महानाम्न्यामाम्नातः । ऋतुश्छन्द ऋतं बृहदित्ययं चतुर्थ उपसर्गः स च षष्ठ्यां महानाम्न्यामाम्नातः । सुम्न आधेहि नो वसाविति पञ्चम उपसर्गः स चाष्टम्यां महानाम्न्यामाम्नातः । एतेषु पञ्चसूपसर्गेषु मिलित्वा द्वात्रिंशदक्षरसद्भावादियमेकाऽनुष्टुबिति सूत्रस्यार्थः । इयं चानुष्टुबविहृतषोळशिनि तं[1]थै(थै)व पठनीया । अन्यत्र तु विहृतषोळशिनि पञ्चाप्युपसर्गान्विभज्यातिच्छन्दःसु पञ्चसु योजनीया[2] । अत एवोपसृज्यमानत्वादुपसर्गा इत्युच्यन्ते । तदेतत्संयोजनमत्रोपसृजतीति शब्देन विधीयते । त्रिकद्रुकेष्विति येयं प्रथमाऽतिच्छन्दास्तस्याश्चतुःषष्ट्यक्षरत्वान्न पराण्यपेक्षते सेयमनुष्टुब्द्वयसंपत्तिः शक्येति । द्वितीयस्यामृचि तदनुष्टुब्द्वयं पूरयितुं प्रचेतनेत्यक्षरचतुष्टयं योजनीयम् । तृतीयस्यामृचि प्रचेतयेति योजनीयम् । प्रोष्वस्मा इत्यादिषु तिसृष्ववशिष्टास्त्रय उपसर्गाः क्रमेण योजनीयाः । सोऽयं प्रकार आश्वलायनेनोक्तः—‘ साऽनुष्टुभमतिच्छन्दःस्ववदध्याद्द्वितीयतृतीययोः पादयोरवसानत उपदध्यात्प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्यामुत्तरास्वितरान्पादान्षष्ठान्कृत्वाऽनुष्टुप्कारं शंसेत् ’ इति ।

अथ महानाम्नीः प्रशंसति—

अयं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीया सर्वेभ्यो वा एष लोकेभ्यः संनिर्मितो यत्षोळशी तद्यन्महानाम्नीनामुपसर्गानुपसृजति सर्वेभ्य एवैनं तल्लोकेभ्यः संनिर्मिमीते, इति ।

प्रथमत्वादिसाम्येन लोकत्रयरूपत्वमृचां द्रष्टव्यम् । षोडशिनो लोकत्रयनि[3]र्मितत्वात् । महानाम्नीनामुपसर्गैः संयोजने सति तन्निर्माणं सिध्यति ।

वेदनं प्रशंसति—

सर्वेभ्यो लोकेभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद, इति ।

अथ विहरणनैरपेक्ष्येणाध्यापकैः प्रज्ञाता नवानुष्टुभो विधत्ते—

---

१ क. मन्त्रैवं । २ क. झ. ट. °नीयाः । अ° । ३ क. झ. ट. °त्रये नि° ।

प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत यो व्यतीरँफाणय-
दिति प्रज्ञाता अनुष्टुभः शंसति तद्यथेह चेह चाप-
थेन चरित्वा पन्थानं पर्यवेयात्तादृक्तद्यत्प्रज्ञाता
अनुष्टुभः शंसति, इति ।

प्रप्रव इत्येकस्तृचः प्रथमोऽर्चतेति द्वितीयो यो व्यतीनिति तृतीयः । यथा लोके कश्चिन्मार्गानभिज्ञस्तत्र तत्र केनचिदपथेन चरित्वा पश्चादन्यमुखेन विज्ञाय समीचीनं पन्थानं परिगच्छेदेवमत्रापि पूर्वोक्तरीत्या कृत्रिमा अनुष्टुभः शस्त्वा पश्चादेतासां स्वतःसिद्धानामनुष्टुभां शंसनं द्रष्टव्यम् ।

पूर्वत्र सामविशेषमुपजीव्य विहृताविहृतयोः शस्त्रविशेषयोर्व्यवस्था दर्शिता । इदानीं पुरुषविशेषमुपजीव्य तां व्यवस्थां दर्शयति—

स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं
शंसयेन्नेच्छन्दसां कृच्छ्रादवपद्या इत्यथ यः पाप्मा-
नमपजिघांसुः स्याद्विहृतं षोळशिनं शंसयेद्व्याति-
षक्त इव वै पुरुषः पाप्मना व्यतिषक्तमेवास्मै त-
त्पाप्मानं शमलमपहन्ति, इति ।

स लोकप्रसिद्धो यः पुरुषः पुत्रपौत्रादिभिर्व्याप्तो गतश्रीरिव प्राप्तश्रीवत्समृद्धधन एवाहमिति मन्येत स पुमानविहृतं विहरणरहितं षोळशिनं शंसयेत् । अविहृते शस्त्रे होतारं प्रेरयेत् । तस्य कोऽभिप्राय इति स उच्यते । छन्दसां कृच्छ्रात्पूर्वोक्तानां गायत्र्यादीनां विहरणक्लेशादवपद्ये, अवपत्तिमापदं प्राप्नुयां तन्मा भूदिति विहरणप्रयुक्तिभीतिद्योतनार्थो नेदिति शब्दः । अथ पुमान्पुत्रधनराहित्यरूपं पाप्मानमपजिघांसुरपहन्तुमिच्छन्स्यात्स पुमान्विहृते शस्त्रे होतारं प्रेरयेत् । अयं पुरुषो दारिद्र्यादिरूपेण पाप्मना व्यतिषक्त इव वै मिश्रित एव तस्माद्विहृतप्रयोगेण पापरूपशमलं मालिन्यहेतुव्यतिषक्तं दारिद्र्यादिसंबद्धमपहन्ति ।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद, इति ।

---

प्रप्र वस्त्रिष्टुभमिषमर्चत०—८-६९-१ । अर्चत प्रार्चत०—८-६९-८ । यो व्यतीरँफाणयत्०—८-७०-१३ ।

अथ शस्त्रसमापनीयां कांचिदृचं विधत्ते—

**उद्यद्ब्रध्नस्य विष्टपमित्युत्तमया परिदधाति स्वर्गो वै लोको ब्रध्नस्य विष्टपं स्वर्गमेव तल्लोकं यजमानं गमयति,** इति ।

अस्यामृचि ब्रध्नस्य विष्टपमिति श्रूयत आदित्यो ब्रध्नशब्दवाच्योऽसावादित्यो ब्रध्न इति श्रुत्यन्तरात् । तस्य विष्टपं स्थानं स्वर्गलोकोऽतस्तत्पाठेन यजमानं स्वर्गं प्रापयति ।

शस्त्रयाज्यां विधत्ते—

**अपाः पूर्वेष। हरिवः सुतानामिति यजति,** इति ।

हे हरिवो ह इन्द्र षोळशिनः पूर्वेषां सुतानां सोमानां रसमिति शेषः । अपाः पीतवानसीति प्रथमपादस्यार्थः ।

तमिमं पादं प्रशंसति—

**सर्वेभ्यो वा एष सवनेभ्यः संनिर्मितो यत्षोळशी तद्यदपाः पूर्वेषां हरिवः सुतानामिति यजति पीतवद्वै प्रातःसवनं प्रातःसवनादेवैनं तत्संनिर्मिमीते,** इति ।

यः षोळशी विद्यत एष सर्वेभ्यः सवनेभ्यः सम्यङ्निर्मित इत्येवं संपादनीयम् । तथा सति तद्यदपाः पूर्वेषामिति पादं पठेत् । तदानीं तत्र प्रातःसवनं पीतवदिन्द्रेण पीतमेवेत्ययमर्थः प्रतीयते । तस्मादेनं षोडशिनं प्रातःसवनं निर्मितत्वाद्भवति ।

तस्या ऋचो द्वितीयपादमनूद्य व्याचष्टे—

**अथो इदं सवनं केवलं त इति माध्यंदिनं वै सवनं केवलं माध्यंदिनादेवैनं तत्सवनात्संनिर्मिमीते,** इति ।

अथो अपि च ह इन्द्रेदं माध्यंदिनं सवनं ते केवलं तवैव सर्वम् ।

---

उद्यद्ब्रध्नस्य विष्टप०—८-६९-७ । अपाः पूर्वेषां हरिवः०-१०-९६-१३ ।

---

१ क. झ. ट. यद्यपाः । २ ख, षोळशि° । ३ ख. °मितो भ° ।

अस्मिन्पादे केवलं सवनमपीन्द्रस्येत्येतदुपपन्नम् । इन्द्रेण पुरो द्वारं वृण्वता माहेन्द्रं ग्रहं माध्यंदिनं सवनानां निष्केवल्यादीनां स्वार्थमेव कृतत्वात् । अत एतत्पादपाठेन माध्यंदिनसवनात्षोडशी निर्मितो भवति ।

तृतीयपादमनूद्य व्याचष्टे—

ममद्धि सोमं मधुमन्तमिन्द्रेति मद्वद्वै तृतीय-
सवनं तृतीयसवनादेवैनं तत्संनिर्मिमीते, इति ।

हे इन्द्र मधुमन्तं माधुर्यरसोपेतं सोमं पीत्वा ममद्धि मदं हर्षं माप्नुहि । अस्मिन्पादे मदिधात्वर्थः श्रूयते । तृतीयसवनमपि मद्वद्वै मदिधातूपेतम् । निवित्पदेषु मदिधातोर्विद्यमानत्वात् । तस्मादेतत्पादपाठेन षोडशी तृतीयसवनान्निर्मितो भवति ।

चतुर्थपादमनूद्य व्याचष्टे—

सत्रा वृषञ्जठर आवृषस्वेति वृषण्वद्वै
षोळशिनो रूपं सर्वेभ्यो वा एष सव-
नेभ्यः संनिर्मितो यत्षोळशी तद्यदपाः
पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्य
एवैनं तत्सवनेभ्यः संनिर्मिमीते, इति ।

हे वृषन्वर्षणसमर्थ सत्रा सोमयागरूपे सत्रे जठरे स्वकीय उदर आवृषस्व समन्तात्सोमरसवृष्टिं कुरु । अत्र चतुर्थपादे वृषञ्शब्दो विद्यते । षोडशिस्वरूपमपि वृषण्वद्वर्षणोपेतं तृप्तिहेतुत्वात् । यः षोडशी विद्यते सोऽयमुक्तेन प्रकारेण सर्वेभ्यः सवनेभ्यो हि निर्मितः । तस्मादपाः पूर्वेषामिति याज्यापाठेन सर्वसवनेभ्य एवैनं निर्मितवान्भवति ।

वेदनं प्रशंसति—

सर्वेभ्यः सवनेभ्यः संनिर्मितेन षोळ-
शिना राध्नोति य एवं वेद, इति ।

अस्या याज्यायाः पादेषु पूर्ववदुपसर्गान्विधत्ते—

महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकाद-
शाक्षरेषु पादेषु सर्वेभ्यो वा एष च्छन्दोभ्यः

१ ख. 'इन्द्रग्रहाणां मा' । २ क. झ. ट. मोदं ।

संनिर्मितो यत्षोळशी तद्यन्महानाम्नीनां पञ्चा-
क्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्य
एवैनं तच्छन्दोभ्यः संनिर्मिमीते, इति ।

महानाम्नीनामृचां संबन्धिनस्तदीयानुवाके समाम्नाता एवा ह्येवेत्यादयः पञ्चाक्षरा उपसर्गास्तानेकादशाक्षरेषु चतुर्ष्वपि पादेषु संयोजयेत् । तथा सति चतुःषष्ट्यक्षरत्वादनुष्टुब्द्वयं संपद्यते । एवं सति यः षोळशी सर्वेभ्यश्छन्दोभ्यो निर्मातव्यः सोऽयमेतत्संयोजनेन तथैव निर्मितो भवति ।

वेदनं प्रशंसति—

सर्वेभ्यश्छन्दोभ्यः संनिर्मितेन षोळ-
शिना राध्नोति य एवं वेद ॥ ४ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्म-
णभाष्ये षोडशाध्याये चतुर्थः खण्डः ॥ ४ ॥ [ १२५ ] ।

---

षोडशी समाप्तः । अथातिरात्रो वक्तव्यः । तत्रेन्द्रस्य च्छन्दसां च प्राधान्यं कथयितुमितिहासमाह—

अहर्वै देवा अश्रयन्त रात्रीमसुरास्ते समाव-
द्वीर्या एवाऽऽसन्न व्यावर्तन्त सोऽब्रवीदिन्द्रः
कश्चाहं चेमानितोऽसुरान्रात्रीमन्ववेष्याव इति
स देवेषु न प्रत्यविन्ददबिभयू रात्रेस्तमसो
मृत्योस्तस्माद्धाप्येतर्हि नक्तं यावन्मात्रमिवैवा-
पक्रम्य बिभेति तम इव हि रात्रिर्मृत्युरिव, इति ।

पुरा कदाचिदहोरात्रयोर्मध्ये देवा अहरेवाऽऽश्रितवन्तोऽसुराश्च रात्रिमा-श्रितवन्तः । ते देवाश्चासुराश्च समानबला एवाऽऽसन् । बलाधिक्येन वर्गा-न्तराद्व्यावृत्तमितरवर्गस्थानं नाप्नुवन् । तदानीमिन्द्रो देवान्प्रत्यब्रवीत् । मम सहायोऽपेक्षितो हे देवा भवतां मध्ये कश्चाहं चेमानसुरान्रात्रीमनुगतानितो रात्र्या अवेष्यावोऽपसारयिष्याव इति । ततो विचार्य स इन्द्रो देवेषु मध्ये

---

१ क. ख. ड. षोडशी ।

तादृशं शूरं कमपि प्रतीक्ष्य नाविन्दन्न लब्धवान्। रात्रेः संबन्धि यत्तमो मृत्युसदृशं तस्मात्तमसो मृत्योरिव सर्वे देवा अबिभयुर्भीता अभवन्। यस्माद्देवानां भीतिस्तस्मादिदानीमपि यावन्मात्रमिवैव यत्किंचिदपि वा दूरं रात्रौ गृहादपक्रम्य सर्वः पुरुषो बिभेति। तम इव हि तमोरूपैव रात्रिस्तस्मान्मृत्युरिव भयहेतुः।

अथ च्छन्दसामिन्द्रसहकारित्वं दर्शयति—

तं वै छन्दांस्येवान्ववायंस्तं यच्छन्दांस्येवान्ववायंस्तस्मादिन्द्रश्चैव च्छन्दांसि च रात्रीं वहन्ति न निविच्छस्यते न पुरोरुङ्न धाय्या नान्या देवतेन्द्रश्च ह्येव च्छन्दांसि च रात्रीं वहन्ति, इति।

तं वा असुरनिराकरणाय प्रवृत्तं तमेवेन्द्रमेकं गायत्र्यादिच्छन्दांस्येवान्ववायन्ननुगम्य निराकर्तुं गताः। यस्मादेवं तस्मादिन्द्रच्छदांस्येवातिरात्रप्रयोगे रात्रीं वहन्ति रात्रिप्रयोगस्य निर्वाहकाणि भवन्ति। इन्द्रविषयच्छन्दांस्येव तत्र शस्यन्ते न तु निविद्वा पुरोरुग्वा धाय्या वा देवतान्तरं वा किंचिच्छस्यते। तस्मादिन्द्रश्छदांसि चेत्येतावन्त एव निर्वाहकाः।

तेषामिन्द्रच्छन्दसामसुरनिराकरणसाधनं दर्शयति—

तान्वै पर्यायैरेव पर्यायमनुदन्त यत्पर्यायैः पर्यायमनुदन्त तत्पर्यायाणां पर्यायत्वम्, इति।

तान्वै रात्रिमाश्रितानसुरान्पर्यायैश्चमसगणानां क्रमानुष्ठानैरेव पर्यायैस्तत्र तत्र यतमाना यागभूमौ परीत्यानुदन्त निराकृतवन्तः। यत्र यत्रासुराः सुप्ता अवस्थितास्तत्र तत्र प्रयत्नेनावेक्ष्य निःसारितवन्तः। द्वादशानां चमसगणानामनुष्ठानाय त्रयः पर्याया एकैकस्मिन्पर्याये चत्वारो गणा अनुष्ठीयन्ते। यस्मात्परितो गत्वा गत्वा चमसपर्यायैर्निराकृतवन्तस्तस्मात्परिगम्य निराकरणसाधनत्वात्पर्यायत्वं संपन्नम्।

क्रमेण निराकरणप्रकारं दर्शयति—

तान्वै प्रथमेनैव पर्यायेण पूर्वरात्रादनुदन्त मध्यमेन मध्यरात्रादुत्तमेनापररात्रात्, इति।

---

१ क. झ. °न्द्रच्छन्दांस्यवोद्गतयाऽति°।

दश दश घटिका एकैको भाग इत्येवं रात्रेस्त्रयो भागाश्चत्वारश्चमसगणा एकः पर्यायः । इत्येवं द्वादशानां चमसगणानां त्रयः पर्यायास्तैः क्रमेण रात्रिभागत्रयादसुरानपानुदन्त ।

तस्मिन्निराकरणे छन्दसां सौकर्याधिक्येन प्रशंसां दर्शयति—

अपि शर्वर्या अनुस्मसीत्यब्रुवन्नापिशर्वराणि खलु वा एतानि च्छन्दांसीति ह स्माऽऽहैतानि हीन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्यपारयंस्तदपिशर्वराणामपिशर्वरत्वम् ॥ ५ ॥ इति ।

ह इन्द्र वयमपि शर्वर्याः कृत्स्नाया रात्रेः सकाशादसुरानपसारयितुं त्वामनुगम्य स्मसि तिष्ठाम इत्येवं छन्दांस्यब्रुवन् । तदेतद्वाक्यमैतरेयः श्रुत्वा तदानीमवैतानि च्छन्दांस्यपिशर्वराण्येवेति नाम्ना व्यवहृतवान् । एतच्च युक्तम् । यस्मान्मृत्योरिव रात्रेस्तमसो बिभ्यतमिन्द्रमेतानि च्छन्दांस्यत्यपारयन्यस्माद्धेतो रात्रिमतीत्य नीतवन्ति तस्मात्कारणाच्छर्वर्याः सर्वस्मादपि पारनयनं द्योतयितुमपिशर्वराणीति नामच्छन्दसां युक्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षोडशाध्याये पञ्चमः खण्डः ॥ ५ ॥ [१२६] ।

---

इन्द्रस्य च्छन्दसां च प्राधान्यमभिहितम्। अथ शस्त्रं विधातव्यम्। षोडशिपर्यन्तं पूर्ववदनुष्ठाय षोडशिन ऊर्ध्वं रात्रिपर्यायाः शंसनीयाः । तत्र त्रयः पर्यायाः। तत्रैकपर्यायश्चतुःशस्त्रोपेतः । होतुरेकं शस्त्रं होत्रकाणां च त्रयाणामेकैकमिति चतुष्टयम् ।

अत्र प्रथमपर्याये होतुः शस्त्रं विधत्ते—

पान्त मा वो अन्धस इत्यन्धस्वत्याऽनुष्टुभा रात्रीं प्रतिपद्यते, इति ।

अन्धःशब्दो यस्यामृच्यस्ति सेयमन्धस्वती । सा चात्रानुष्टुप्छन्दस्का । तया रात्रीं रात्रिशस्त्रं प्रतिपद्यते प्रारभेत ।

तस्यामृचि च्छन्दः प्रशंसति—

आनुष्टुभी वै रात्रिरेतद्रात्रिरूपम्, इति ।

---

पान्त मा वो अन्धसः०-८-९२-१ ।

गायत्रीत्रिष्टुब्जगत्यनुष्टुभां मध्ये गायत्र्यादीनां त्रयाणां सवनत्रयगतानामहनि प्रयुक्तत्वादनुष्टुभः प्रयोगाय रात्रिरेव कालः परिशिष्यते। तस्माद्रात्रेरनुष्टुप्संबद्धत्वादियमनुष्टुब्रात्रेः स्वरूपम्।

अथ त्रिषु पर्यायेषु शस्त्रयाज्यां विधत्ते—

अन्धस्वत्यः पीतवत्यो मद्वत्यस्त्रिष्टुभो याज्या
भवन्त्यभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम्, इति।

अन्धःशब्दो यास्वृक्ष्वस्ति ता अन्धस्वत्यः। तादृश्यश्चतस्र ऋचः प्रथमपर्याये होत्रादीनां चतुर्णां शस्त्रयाज्याः कर्तव्यास्ताश्च त्रिष्टुप्छन्दस्का एव। तत्राध्वर्यवो भरतेन्द्राय सोममित्येषा होतुः शस्त्रयाज्या। सा चान्धस्वती त्रिष्टुप्छन्दस्का च। तस्या द्वितीयपादे सिञ्चता मद्यमन्ध इत्यन्धःशब्दः श्रूयते। एवमितरेषां त्रयाणां शस्त्रयाज्या उदाहरणीयाः। पिबतिधातुर्यास्वृक्ष्वस्ति ताः पीतवत्यः। तादृश्यो मध्यपर्याये याज्याः कर्तव्याः। अपाय्यस्यान्धसो मदायेति होतुः शस्त्रयाज्या। तत्रापाय्येति पिबतिधातुः श्रूयते। मादिधातुर्यास्वृक्ष्वास्ति ता मद्वत्यः। तादृश्यस्तृतीयपर्याये याज्याः कर्तव्याः। तिष्ठा हरी इत्येषा होतुः शस्त्रयाज्या। तस्या अवसाने ररिमा ते मदायेति मदिधातुः श्रूयते। एवं सर्वमुदाहार्यम्। रात्रावन्नभोजनादन्धस्वतीनामानुरूप्यम्। क्षीरपानात्पीतवतीनाम्। तत ऊर्ध्वं हर्षान्मद्वतीनामेवमानुरूप्ये सति तत्तत्कर्म समृद्धं भवति।

प्रथमपर्याये प्रयोगविशेषं विधत्ते—

प्रथमेन पर्यायेण स्तुवते प्रथमान्येव
पदानि पुनराददते यदेवैषामश्वा गाव
आसंस्तदेवैषां तेनाऽऽददते, इति।

यदा सामगाः प्रथमेन पर्यायेण स्तुवते तदानीं स्तोत्रियाणां प्रथमपादान्द्विरभ्यस्यन्ति। एवं शस्त्रेऽपि पुरुहूतं पुरुष्टुतमित्यादिकाः[3] प्रथमपादा द्विरभ्यसनीया, यथा वाव स्तोत्रमेवं शस्त्रमित्युक्तत्वात्। एवं सत्येषामसुराणामश्वा गाव आसान्निति यदस्ति तत्सर्वमसुराणां धनं तेन प्रथमपादाभ्यासेन स्वी कुर्वन्ति।

---

१ ख. त्रिष्टुभः। २ ख. °दादिं द्विर°। ३ ख. °दिकः प्रथमः पादो द्विरभ्यसनीयः। यथा।

द्वितीयपर्याये विशेषं विधत्ते—

मध्यमेन पर्यायेण स्तुवते मध्यमान्येव पदानि पुनराददते यदेवैषामनो रथा आसंस्तदेवैषां तेनाऽऽददते, इति ।

अयं त इन्द्र सोम इत्यस्यामृचि निपूतो अधि बर्हिषीत्येवं मध्यमः पादो द्विरभ्यसनीयः। एषामसुराणामनः शकटं यदस्ति ये च रथास्तत्सर्वं तेनाभ्यासेन स्वीकृतं भवति ।

तृतीयपर्याये विशेषं विधत्ते—

उत्तमेन पर्यायेण स्तुवत उत्तमान्येव पदानि पुनराददते यदेवैषां वासो हिरण्यं मणिरध्यात्ममासीत्तदेवैषां तेनाऽऽददते, इति ।

इदं ह्यन्वोजसा सुतमित्यस्यामृचि पिबात्वस्य गिर्वणः। पिबात्वस्य गिर्वण इत्युत्तमस्य पादस्य द्विरभ्यासः। आत्मानं शरीरमधिकृत्य वर्तत इत्यध्यात्ममसुराणां शरीरेऽवस्थितं वासो हिरण्यं मणिरित्येवमादिकं सर्वं गृहीतं भवति ।

वेदनं प्रशंसति—

आ द्विषतो वसु दत्ते निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद, इति ।

द्विषतः शत्रोः सकाशात्तदीयं धनमादत्ते। एनं शत्रुं सर्वेभ्यो लोकेभ्यो निर्णुदते निराकरोति ।

अत्र कंचित्प्रश्नमुत्थापयति—

पवमानवदहरित्याहुर्न रात्रिः पवमानवती कथमुभे पवमानवती भवतः केन ते समावद्भाजौ भवत इति, इति ।

बहिष्पवमानो माध्यंदिनः पवमान आर्भवः पवमानश्चेत्येवमहनि पवमानस्तोत्रत्रयं विद्यते न तु रात्रौ तदस्त्यत उभयोः पवमानत्वं कथं सिध्यति। तदसिद्धौ च केनोपायेनाहश्च रात्रिश्चेत्येते समावद्भाजौ भवतः समानभागयुक्ते भवत इति प्रश्नवादिन आहुः ।

तत्रोत्तरमाह—

यदेवेन्द्राय मद्वने सुतमिदं वसो सुतमन्ध इदं ह्य-न्वोजसा सुतमिति स्तुवन्ति च शंसन्ति च तेन रात्रिः पवमानवती तेनोभे पवमानवती भवतस्तेन ते समावद्भाजौ भवतः, इति।

यदेवेन्द्राय मद्वने सुतमिदं वसो सुतमन्ध इदं ह्यन्वोजसा सुतमिति ताभिरेताभिस्तिसृभिरुद्गातारः स्तुवन्ति। होतारः शंसन्ति। अहनि यथा त्रिष्वपि पवमानस्तोत्रनामसु पवमानशब्दोऽनुवृत्त एवमत्रापि तिसृष्वृक्षु सुतशब्दोऽनुवृत्तोऽतः पवमानसाम्याद्रात्रिः पवमानवती। तेन प्रकारेणोभयोः पवमानवत्त्वे साम्ये सति तुल्यभागत्वं सिध्यति।

पुनरपि प्रश्नान्तरमुत्थापयति—

पञ्चदशस्तोत्रमहरित्याहुर्न रात्रिः पञ्चदशस्तोत्रा कथमुभे पञ्चदशस्तोत्रे भवतः केन ते समावद्भाजौ भवत इति, इति।

अग्निष्टोमस्तोत्राणि द्वादश उक्थ्यस्तोत्राणि त्रीण्येतान्यहनि प्रयुज्यन्ते। तस्मादहः पञ्चदशस्तोत्रोपेतम्। रात्रौ तु न तानि विद्यन्ते। कथं पञ्चदशस्तोत्रसाम्येन तयोर्भागसाम्यं सिध्यतीति प्रश्नः।

तत्रोत्तरमाह—

द्वादश स्तोत्राण्यपिशर्वराणि तिसृभिर्देवताभिः संधिना राथंतरेण स्तुवते तेन रात्रिः पञ्चदशस्तोत्रा तेनोभे पञ्चदशस्तोत्रे भवतस्तेन ते समावद्भाजौ भवतः, इति।

द्वादशसु चमसगणपर्यायेषु द्वादश स्तोत्राणि विद्यन्ते तान्यपिशर्वराणि। रात्रावनुष्ठेयानां छन्दसामपिशर्वरसंज्ञा पूर्वमुक्ता। तैश्छन्दोभिर्निष्पाद्यत्वात्स्तोत्राण्यपि तन्नामकानि। रथंतरसाम्ना निष्पाद्यं यत्संधिस्तोत्रं तत्र तिस्रो

---

इन्द्राय मद्वने सुतं०—८-९२-१९। इदं वसो सुतमन्धः०—८-२-१। इदं ह्यन्वोजसा सुतं०—३-५१-१०।

देवताः श्रूयन्ते । ताभिः स्तोतव्याभिस्तिसृभिर्देवताभिः स्तोत्रमपि त्रेधा भिद्यते । तेन कारणेन ताभिः पञ्चदशस्तोत्रा संपन्ना । तथा सत्युभयोरहोरात्रयोः स्तोत्रसंख्यासाम्यात्समानभागोपेतत्वं सिध्यति ।

शस्त्रबाहुल्यं प्रशंसति—

परिमितं स्तुवन्त्यपरिमितमनुशंसति परिमितं वै भूतमपरिमितं भव्यमपरिमितस्यावरुद्ध्या इति, इति ।

उद्गातारः परिमितं यथा भवति तथा स्तुवन्ति । त्रिवृत्पञ्चदश(शः) सप्तदश एकविंश इत्येवं चतुर्भिरेव स्तोमैरत्र सर्वस्तोत्रनिष्पत्तेः । होता त्वपरिमितं यथा भवति तथाऽनुशंसति । शंसनीया ऋच एतावत्य एवेति सर्वत्रानुगतस्य संख्यानियमस्य कस्यचिदभावात् । पूर्वभाविनः स्तोत्रस्य परिमितत्वमुत्तरभाविनः शस्त्रस्यापरिमितत्वं च लौकिकन्यायानुसारि । लोके भूतं पूर्वं संपादितं धनं परिमितमियदेवेति नियतिरस्ति । भव्यमितः परं संपादनीयं धनमपरिमितम् । तृष्णाया निरवधिकत्वेनैतावदेव संपादयिष्यामि न त्वधिकमिति नियतेरभावात् । तस्मादुपरितनशंसनबाहुल्यमपरिमितधनप्राप्त्यै भवतीत्यभिप्रेत्य होतुरपरिमितमनुशंसनम् ।

प्रकारान्तरेण शस्त्रबाहुल्यं प्रशंसति—

अति शंसति स्तोत्रमति वै प्रजाऽऽत्मानमति पशवस्तद्यत्स्तोत्रमति शंसति यदेवास्यात्यात्मानं तदेवास्यैतेनावरुन्धेऽवरुन्धे ॥६॥ इति ।

स्तोत्रगतामृक्संख्यामतिलङ्घ्य होता शंसतीति यदस्ति तद्युक्तमेव । लोके ह्यात्मानमतिलङ्घ्य प्रजानां चावस्थितत्वात् । स्वयमेक एव पुत्रादयस्तु बहवो गवाश्वादिपशवश्च बहवस्तस्मादात्मस्थानीयं स्तोत्रं प्रजापशुस्थानीयशस्त्राधिक्येन यदेव प्रजापश्वादि धनं तस्य यजमानस्य स्वात्मानमतिक्रम्याधिकमभीष्टं तत्सर्वमस्य यजमानस्य होता संपादयति । पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षोडशाध्याये षष्ठः खण्डः ॥ ६ ॥ [१२७] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये षोडशोऽध्यायः ॥ १६ ॥

====

अथ सप्तदशोऽध्यायः ।

---

पृष्ठे षोडश्यह्नि संस्थाचतुर्थे
सर्वच्छन्दोविक्रियाऽनुष्टुबाख्ये ।
पर्यायाणां स्याच्चतुःशस्त्रकाणां
रात्रौ संधेः संख्यया पाञ्चदश्यम् ॥

अथातिरात्रक्रतावेव रात्रिपर्यायेभ्य ऊर्ध्वमाश्विनशस्त्रमाख्यायिकामुखेन विधत्ते—

प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छ-त्सूर्यां सावित्रीं तस्यै सर्वे देवा वरा आगच्छं-स्तस्या एतत्सहस्रं वहतुमन्वाकरोद्यदेतदा-श्विनमित्याचक्षतेऽनाश्विनं हैव तद्यदर्वाक्स-हस्रं तस्मात्तत्सहस्रं वैव शंसेद्भूयो वा, इति ।

पुरा कदाचित्प्रजापतिः कांचिद्दुहितरं सोमाय राज्ञे प्रायच्छद्विवा-हार्थं दातुमुद्युक्तवान् । कीदृशीं दुहितरम् । सूर्यामित्येतन्नामधेययुक्ताम् । सावित्रीं सवित्रा लब्धाम् । यद्यप्येषा सवितुः पुत्री तथाऽपि स्नेहातिशयेन प्रजापते-र्दुहितेत्युच्यते । तस्यै दुहित्रे तल्लाभार्थं सर्वे देवा वरा भूत्वा प्रजापतेः सका-शमागमन् । स च प्रजापतिस्तस्यै दुहितृलाभार्थमेतद्वक्ष्यमाणमृचां सहस्रं वह-तुमन्वाकरोत् । वहनस्य विवाहस्यालंकारार्थं माङ्गल्यार्थं च वरस्य पुरतो वहनीयो हरिद्रागुडादिमङ्गलद्रव्यसंघो वहतुर्यदेतदृक्सहस्रं याज्ञिका आश्विन-सहस्रमित्याचक्षते तत्सहस्रमेव वहतुरूपेण प्रत्यभिज्ञातवान् । स देवानां मध्ये यो वर आश्विनशस्त्रमत्रानेक एव पठति तस्मै दास्यामीति प्रतिज्ञातवानि-त्यर्थः । सहस्रादर्वाचीना ऋचो यस्मिञ्शस्त्रे तदर्वाक्सहस्रम् । तादृशं यदस्ति तद-नाश्विनमेव । यस्मादाश्विनं सहस्रं प्रजापतिरङ्गीकृतवांस्तस्माद्धोता सहस्रमेव शंसेत् । ततोऽप्यधिकं वा शंसेत् । न तु न्यूनम् ।

शंसनस्येतिकर्तव्यतां विधत्ते—

प्राश्य घृतं शंसेद्यथा ह वा इदमनो वा रथो वाऽक्तो वर्तत एवं हैवाक्तो वर्तते, इति ।

---

१ ख. 'त्राप्तिः । प° ।

प्रथमतो घृतं प्राश्य पश्चाच्छंसेत् । यथा लोके किंचिदिदं निदर्शनं तद्वत् । किं निदर्शनमिति तदुच्यते । अनः स्वल्पशकटं वा प्रौढो रथो वा यदा प्रवर्त्यते तदानीमस्य चक्रभ्रमणस्थाने मषीमिश्रेण तैलेनाञ्जने कृते पश्चात्स्वल्पं शकटं रथो वा सहसा प्रवर्तते । एवमसौ होता घृतेनाक्तः शस्त्रे प्रवर्तते ।

इतिकर्तव्यतान्तरं विधत्ते—

शकुनिरिवोत्पतिष्यन्नाह्वयीत, इति ।

यथा लोके शकुनिः कश्चित्पक्षी पद्भ्यां भूमिं दृढमवष्टभ्योत्पतिष्यन्नूर्ध्वमुखोत्पतनं कर्तुमिच्छन्पक्ष्यन्तरमभिलक्ष्य ध्वनिं करोत्येवमसौ होता तदाकारं घटनं कुर्वन्नाहावं पठेत् । तदेतदाश्वलायनाचार्यैः स्पष्टीकृतम्—'प्राश्य प्रतिप्रसृप्य पश्चात्स्वस्य धिष्ण्यस्योपविशेत्समस्तजङ्घोरुररत्निभ्यां जानुभ्यां चोपस्थं कृत्वा यथा शकुनिरुत्पतिष्यन्नुपस्थकृतस्त्वेवाऽऽश्विनं शंसेत्' इति ।

आश्विनशस्त्रस्य प्रतिपदमाख्यायिकामुखेन विधत्ते—

तस्मिन्देवा न समजानत ममेदमस्तु ममेदमस्त्विति ते संजानाना अब्रुवन्नाजिमस्याऽऽयामहै स यो न उज्जेष्यति तस्येदं भविष्यतीति तेऽग्नेरेवाधि गृहपतेरादित्यं काष्ठामकुर्वत तस्मादाग्नेयी प्रतिपद्भवत्याश्विनस्याग्निर्होता गृहपतिः स राजेति, इति ।

तस्मिन्नाश्विनशस्त्रे देवाः परस्परं न समजानत संज्ञानं प्रतिपत्तिं नाकुर्वन् । कीदृशी तदीया प्रतिपत्तिरिति सोच्यते । ममैवेदमाश्विनमास्त्वाति सर्वेषामभिप्रायः । सर्वविषयत्वं द्योतयितुमियं वीप्सा । ते विप्रतिपन्ना देवाः संजानानाः संप्रतिपत्तिं कर्तुमुद्युक्ताः परस्परमिदमब्रुवन् । अस्याऽऽश्विनशस्त्रस्य लाभाय वयं सर्वे कांचिदाजिमायामहै समयबन्धपुरःसरा धावनरूपा गतिराजिस्तां प्राप्नवाम । तस्मिन्नाजिधावने नोऽस्माकं मध्ये च यः प्रबलो यः कोऽपि प्रथममुत्कर्षेण जेष्यति तस्येदमाश्विनं भविष्यतीति समयबन्धः । तेन कृतसमया देवा गृहपतेरग्नेरेवाधि गार्हपत्यस्योपरि द्युलोकवर्तिनमादित्यं काष्ठां धावनसमाप्तिमकुर्वत । गार्हपत्यमारभ्याऽऽदित्यपर्यन्तं धावेदिति तदीया मर्यादा । यस्मादग्निराश्विनप्राप्तिहेतोर्धावनस्योपक्रमस्थानं तस्मादाग्नेयी काचिदृगाश्विनस्य प्रतिपद्भवति प्रारम्भरूपा कर्तव्या । अग्निर्होतेति तस्याः प्रतीकम् ।

अत्र कंचित्पूर्वपक्षमुद्भावयति—

तद्धैक आहुरग्निं मन्ये पितरमग्नि-
मापिमित्येतया प्रतिपद्येत, इति।

प्रारभेतेत्यर्थः।

तत्रोपपत्तिं पूर्वपक्ष्यभिमेतां दर्शयति—

दिवि शुक्रं यजतं सूर्यस्येति प्रथ-
मयैव ऋचा काष्ठामाप्नोतीति, इति।

तस्याश्चतुर्थपादे सूर्यस्य यजतं यस्मादग्निविशेषणं पठ्यते तथा सति प्रथमयैवर्चा सूर्यरूपा काष्ठा धावनाभिरूपाऽऽप्ता भवतीति तेषामभिप्रायः।

तमिमं पक्षं दूषयति—

तत्तन्नाऽऽदृत्यं य एनं तत्र ब्रूयादग्निमिति वै प्रत्य-
पाद्यग्निमापत्स्यतीति शश्वत्तथा स्यात्, इति।

तस्मिञ्शस्त्रोपक्रमे तन्मतमग्निं मन्ये पितरमित्यादिकं नाऽऽदरणीयम्। अनादरणे हेतुरुच्यते। तत्राग्निं मन्य इत्येतयोपक्रमपक्षे यः कोऽपि विरोधी समागत्यैवं होतारं ब्रूयाच्छपेत्। कथं शाप इति तदुच्यते। अनेन होत्राऽग्निमग्निमित्येव प्रत्यपादि प्रारब्धं तस्यामृच्यग्निं पितरमग्निं भ्रातरमित्येवमसकृदग्निस्वरूपं पित्राद्यभिधानादग्निमसौ होता प्राप्नोतीति दग्धो भविष्यतीति यदि शपेत्तदानीं शश्वदवश्यं तथा स्यात्।

परमतं दूषयित्वा स्वमतं निगमयति—

तस्मादग्निर्होता गृहपतिः स राजेत्येत-
यैव प्रतिपद्येत गृहपतिवती प्रजातिमती
शान्ता सर्वायुः सर्वायुत्वाय, इति।

अस्यामृचि गृहपतिशब्दः स्पष्टं दृश्यते। तस्मादियं गृहपतिवती। तथा द्वितीयपादे विश्वा वेद जनिमेति सर्वप्राणिजननाभिज्ञानकथनादियं प्रजातिमती। बहुकृत्वोऽग्निशब्दस्याभावादियं शान्ता। तस्मादेतया प्रतिपद्यमानो होता सर्वायुर्भवति। तच्च यजमानस्य सर्वायुत्वाय संपद्यते।

---

अग्निं मन्ये पितरमग्निं०—१०-७-३।

वेदनं प्रशंसति—

सर्वमायुरेति य एवं वेद ॥ ७ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तदशाध्याये प्रथमः खण्डः ॥ १ ॥ ( ७ ) [ १२८ ] ।

अथाऽऽग्नेयकाण्डं विधत्ते—

तासां वै देवतानामाजिं धावन्तीनामभिसृष्टानामग्निर्मुखं प्रथमः प्रत्यपद्यत तमश्विनावन्वागच्छतां तमब्रूतामपोदिह्यावां वा इदं जेष्याव इति स तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति तथेति तस्मा अप्यत्राकुरुतां तस्मादाग्नेयमाश्विने शस्यते, इति ।

देवताः सर्वा गार्हपत्याग्निसमीपान्निर्गत्य सूर्यपर्यन्तामाजिमुद्दिश्य धावन्त्योऽभिसृष्टा अभितः प्रवृत्ता एका देवतैकस्यां दिशि धावत्यन्या परस्यां दिशीत्येवं सर्वतो धावन्ति । तासां देवतानां मध्येऽग्निर्मुखं यथा भवति तथा मुख्यो भविष्यामीत्यभिप्रायेण प्रथमः प्रत्यपद्यत पुरोगामी धावनं कृतवान् । तमग्निमनु पश्चादश्विनावागच्छतां समीपं गत्वा तमग्निमब्रूतां हेऽग्ने त्वं शान्तो भविष्यसि तस्मादपोदिह्युत्कर्षेणापेहि दूरेऽपसराऽऽवामुभाववेदमाश्विनमुद्दिश्य जेष्याव इति । सोऽग्निरङ्गीकृत्य तस्यापगच्छतो ममापीह शस्त्रे भागोऽस्त्वित्यङ्गीकृतवान् । अश्विनावङ्गीकृत्य तस्माद( अ )ग्नये विभागं दत्तवन्तौ । यस्मादेवं तस्मादाग्नेयं बहूनामृचां समूहरूपं काण्डमाश्विने शस्त्रे होत्रा शस्यते । शंसनीयं तच्च काण्डं सर्वं सूत्रे द्रष्टव्यम् ।

अथोषस्यं काण्डं विधत्ते—

ता उषसमन्वागच्छतां तामब्रूतामपोदिह्यावां वा इदं जेष्याव इति सा तथेत्यब्रवीत्तस्यै वै ममेहाप्यस्त्विति तथेति तस्या अप्यत्राकुरुतां तस्मादुषस्यमाश्विने शस्यते, इति ।

तावाश्विनावुषसमेतन्नामयुक्तां देवतामन्यत्पूर्ववद्व्याख्येयम् ।

ऐन्द्रं काण्डं विधत्ते—

तावेन्द्रमवागच्छतां तमब्रूतामावां वा इदं मघव-
ञ्जेष्याव इति न ह तं दधृषतुरपोदिहीति वक्तुं स
तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति तथेति तस्मा
अप्यत्राकुरुतां तस्मादैन्द्रमाश्विने शस्यते, इति।

हे मघवन्नावां जेष्याव इत्येवमब्रूतामिन्द्रस्य स्वामित्वात्तमिन्द्रमुद्दिश्यापोदिहीति वक्तुं न दधृषतुर्धाष्ट्यं नाकुरुताम्। अन्यत्पूर्ववत्।

अथाऽऽश्विनं काण्डं विधत्ते—

तदश्विना उदजयतामश्विनावाश्नुवातां यदश्विना उद-
जयतामश्विनावाश्नुवातां तस्मादेतदाश्विनमित्याच-
क्षते, इति।

तत्तस्यामाजौ सहसा सूर्यपर्यन्तं गत्वा तावश्विनावुत्कर्षेणाजयतां ततस्तावेव शस्त्रम( मा )श्नुवातां व्याप्तवन्तौ। यद्यस्मादश्विनौ जयपूर्वकं शस्त्रं व्याप्तवन्तौ तस्मादेतच्छस्त्रमाश्विनमिति याज्ञिका आचक्षते। आश्विनं काण्डं शंसेदित्यभिप्रायः।

वेदनं प्रशंसति—

अश्नुते यद्यत्कामयते य एवं वेद, इति।

प्रश्नोत्तराभ्यां शस्त्रस्याऽऽश्विनत्वमुपपादयति—

तदाहुर्यच्छस्यत आग्नेयं शस्यत उषस्यं शस्यत
ऐन्द्रमथ कस्मादेतदाश्विनमित्याचक्षत इत्यश्विनौ
हि तदुदजयतामश्विनावाश्नुवातां यदश्विना उदज-
यतामश्विनावाश्नुवातां तस्मादेतदाश्विनमित्याच-
क्षते, इति।

आश्विनकाण्डवदाग्नेयोषस्यैन्द्रकाण्डानामपि शस्यमानत्वाच्छस्त्रस्याऽऽग्नेयादिनामपरित्यागेनाऽऽश्विनेनाम्नि कः पक्षपात इति प्रश्नः। अग्निरुषा इन्द्र-

१ क. झ. ट. 'ग्नेयत्वादि'। २ क. ख. झ. ट. 'नत्वना'।

श्चैते परतोऽपसृप्ता न तु सूर्यपर्यन्तमधावन् । अश्विनौ तु धावन्तौ जयपूर्वकं शस्त्रं प्राप्तवन्ताविति तदीयत्वप्रसिद्धिः शस्त्रस्य युक्ता ।

वेदनं प्रशंसति—

अश्नुते यद्यत्कामयते य एवं वेद ॥ ८ ॥ इति ।

पूर्वमाश्विनसंबन्धमात्रवेदनमिह त्वग्न्यादिसंबन्धराहित्यवेदनं चेति विशेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तदशाध्याये द्वितीयः खण्डः ॥ २ ॥ (८) [१२९] ।

---

अथाऽऽश्विनशस्त्रप्रशंसार्थं देवानामाजिधावनकथा पूर्वमुपन्यस्ता । तमेव कथाशेषमाश्विनशस्त्रप्रशंसार्थमेव पुनरप्यनुवर्तयति—

अश्वतरीरथेनाग्निराजिमधावत्तासां प्राजमानो योनिमकूलयत्तस्मात्ता न विजायन्ते, इति ।

अश्वगर्दभसांकर्येण जाताः स्त्रीव्यक्तयोऽश्वतर्यः । तद्युक्तेन रथेनायमग्निराजिमुद्दिश्य धावनं कृतवान् । तदानीं प्राजमानः प्रकर्षेणाश्वतरीः प्रेरयन् । अज पशुप्रेरण इति धातुजन्योऽयं शब्दः । तत्प्रेरणकाले तासां पूर्वपुच्छभागमुपस्पृश्य योनिमकूलयद्दग्धवान् । तस्माद्दग्धयोनित्वात्ता अश्वतर्यो न विजायन्ते विजननमपत्योत्पादनं न कुर्वन्ति ।

अग्नेराजिधावनमुक्त्वोषसो धावनं दर्शयति—

गोभिररुणैरुषा आजिमधावत्तस्मादुषस्यागतायामरुणमिवैव प्रभात्युषसो रूपम्, इति ।

अरुणैर्गोभिरीषद्रक्तवर्णैर्बलीवर्दैर्युक्तेन रथेन यस्मादुषसो धावनं तस्माल्लोकेऽपि रात्रेरवसाने समागतायामुषसि तस्या उषसो रूपं प्राच्यां दिश्यरुणमिवैव रक्तवर्णमेव भूत्वा प्रभाति प्रभायुक्तं भवति ।

इन्द्रस्याऽऽजिधावनं दर्शयति—

अश्वरथेनेन्द्र आजिमधावत्तस्मात्स उच्चैर्घोष उपब्दिमान्क्षत्रस्य रूपमैन्द्रो हि सः, इति ।

यस्मादश्वयुक्तेन रथेनेन्द्रोऽधावत्तस्माल्लोकेऽपि सोऽश्वयुक्तो रथ उच्चैर्घोषो

---

१ ख. 'न्योऽयमजश' ।

बहुलध्वनिर्दृश्यते । तथा क्षत्रस्य रूपमुपब्दिमाञ्शब्दोपेतं दृश्यते । यदा क्षत्रियो निर्गच्छति[तदा]तदीया याष्टिका अन्ये सेवका अश्वपुरतः शब्दं कुर्वन्त एव गच्छन्ति । स च शब्द ऐन्द्रो ह्यसुरयुद्धेषु तद्धीत्यर्थमिन्द्रेण कृतत्वादैन्द्रत्वम् ।

अश्विनोर्धावनं दर्शयति—

गर्दभरथेनाश्विना उदजयतामश्विनावाश्नुवातां यदश्विना उदजयतामश्विनावाश्नुवातां तस्मात्स सृतजवो दुग्धदोहः सर्वेषामेतर्हि वाहनानामनाशिष्ठो रेतसस्त्वस्य वीर्यं नाहरतां तस्मात्स द्विरेता वाजी, इति ।

अश्विनौ गर्दभयुक्तेन रथेन शीघ्रं गत्वा जयपूर्वकमश्विनौ व्याप्तवन्तौ । यद्यस्मादुभौ रथमारुह्यातिवेगेन गत्वा व्याप्तवन्तौ तस्मात्स गर्दभो भारातिशयेन तीव्रधावनेन च लोके सृतजवो गतवेगो दुग्धदोहो गतक्षीररसश्चाभवत् । तस्मादिदानीमपि गजाश्वादिवाहनानां सर्वेषां मध्ये गर्दभोऽनाशिष्ठोऽत्यन्तवेगरहितो दृश्यते । तदीयस्य रेतसस्तु वीर्यं सामर्थ्यमश्विनौ नाहरतां न विनाशितवन्तौ । तस्माद्वेगेन या(पा)नयोग्यं(ग्य) क्षीरेण च राहित्येऽपि स गर्दभो द्विरेता गर्दभाश्वतरजातिद्वयोत्पादको वाजी[1] गमनवान्दृश्यते ।

एवं शस्त्रप्रशंसार्थमवशिष्टमुपाख्यानशेषमभिधाय सौर्याणां मन्त्रसमूहानां संख्यां विधातुं पूर्वपक्षमुद्भावयति—

तदाहुः सप्त सौर्याणि च्छन्दांसि शंसेद्यथैवाऽऽग्नेयं यथोषस्यं यथाऽऽश्विनं सप्त वै देवलोकाः सर्वेषु देवलोकेषु राध्नोतीति, इति ।

आग्नेयोषस्याश्विनकाण्डानि यथा प्रत्येकं गायत्र्यादिभिः सप्तच्छन्दोभिर्युक्तान्येवमत्र सौर्येऽपि काण्डे सप्त च्छन्दांसि शंसनीयानि । तथा सति भोगस्थानरूपाणां देवलोकानामवान्तरभेदेन सप्तविधत्वात्तत्समृद्धिः सिध्यतीति पूर्वपक्षिण आहुः ।

---

१ ख. °जी वेगवा° ।

तं पक्षं निराकृत्य च्छन्दस्त्रयपक्षं विधत्ते—

तत्तन्नाऽऽदृत्यं त्रीण्येव शंसेत्त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै, इति ।

पृथिव्यन्तरिक्षद्युलोकास्त्रय एव त्रिवृतः सत्त्वरजस्तमोगुणैस्त्रिविधाः । अतस्त्रयाणामभिजयाय त्रीण्येव च्छन्दांसि शंसेत् ।

त्रयाणां छन्दसां प्रारम्भं निश्चेतुं पूर्वपक्षमाह—

तदाहुरुदु त्यं जातवेदसमिति सौर्याणि प्रतिपद्येतेति, इति ।

यानि सौर्याणि त्रीणि च्छन्दांसि तेषां प्रारम्भ उदु त्यमिति शंसेदिति पूर्वः पक्षः ।

तमेतं दूषयति—

तत्तन्नाऽऽदृत्यं यथैव गत्वा काष्ठामपराध्नुयात्तादृक्तत्, इति ।

लोके कश्चिद्भाषापूर्वकमप्रमादेन धावनं कृत्वा काष्ठामवधिस्थानं प्राप्यापराध्नुयात्तत्रावसाने स्खलनपतनादिरूपमपराधं कुर्यात्तादृगेव तद्भवति । आग्नेयकाण्डमारभ्य सूर्यकाण्डपर्यन्तमस्खलन्होता समाप्तौ सूर्यकाण्डे स्खलति तस्मादुदु त्यं न शंसेत् ।

इदानीं सिद्धान्तमाह—

सूर्यो नो दिवस्पात्वित्येतेनैव प्रतिपद्येत यथैव गत्वा काष्ठामभिपद्येत तादृक्तत्, इति ।

यथा लोके कश्चिदवधिं प्राप्य स्खलनरहितः स्वाभीष्टं प्राप्नुयात्तादृगेव तद्द्रष्टव्यम् । सूर्यो न इत्यस्मिन्मन्त्रे सूर्यवाय्वग्नीनां लोकत्रयाद्रक्षणं प्रार्थयतो रक्षित(तृ)त्वादेवापराधे न प्राप्नोति । पूर्वत्रैवं नास्तीति विशेषः ।

प्रथमसूक्तं विधाय नवर्चं सूक्तान्तरं विधत्ते—

उदु त्यं जातवेदसमिति द्वितीयं शंसति, इति ।

तदेतदुभयं गायत्रीछन्दस्कम् ।

---

उदु त्यं जातवेदसं०—१-५-१ । सूर्यो नो दिवस्पातु०—१०-१९८-१ ।

---

१ ख. °राधो न ।

अथ त्रैष्टुभं सूक्तं विधत्ते—

चित्रं देवानामुदगादनीकमिति त्रैष्टुभमसौ वाव चित्रं देवानामुदेति तस्मादेतच्छंसति, इति।

अस्मिन्मन्त्रे देवानां संबन्धि किंचिच्चित्रं रूपमुदगादुदयं प्राप्नोतीति श्रूयते। असौ वावाऽऽदित्य एव देवानां संबन्धि चित्रं रूपमुदेति। कालभेदेन वर्णभेददर्शनात्। तस्मादेतत्सूक्तं प्रशस्तत्वादत्र शंसनीयम्।

तृतीयं छन्दो विधत्ते—

नमो मित्रस्य वरुणस्य चक्षस इति जागतं तद्वाशीःपदमाशिषमेवैतेनाऽऽशास्त आत्मने च यजमानाय च ॥ ९ ॥ इति।

तदु तदस्य नमो मित्रस्येत्यादिकमाशीःपदमाशिषः प्रतिपादकं द्वितीयचतुर्थपादयोः सपर्यत शंसतेत्याशीरर्थस्य लोडन्तस्य पदद्वयस्य प्रयुक्तत्वात्तच्छंसनेन होता स्वस्य यजमानस्य चाऽऽशिषं प्रार्थयते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तदशाध्याये तृतीयः खण्डः ॥ ३ ॥ ( ९ ) [ १३० ]।

———

ऐन्द्रादिप्रगाथान्विधातुं प्रस्तौति—

तदाहुः सूर्यो नातिशस्यो बृहती नातिशस्या यत्सूर्यमतिशंसेद्ब्रह्मवर्चसमतिपद्येत यद्बृहतीमतिशंसेत्प्राणानतिपद्येतेति, इति।

तत्तस्मिन्नाश्विनशस्त्रे केचिदभिज्ञा एवमाहुः। देवानां मध्ये यः सूर्योऽस्ति स नातिशस्यः सूर्यमतिलङ्घ्य शंसनं न कर्तव्यम्। तथा छन्दसां मध्ये बृहतीमतिलङ्घ्य शंसनं न कर्तव्यम्। सूर्यस्योपासकेषु ब्रह्मवर्चसप्रदत्वात्तदभिलङ्घने ब्रह्मर्चसं नश्येत्। बृहत्याः प्राणरूपत्वात्तदतिलङ्घने प्राणान्विनाशयेदिति तेषामभिप्रायः।

इदानीमेकं प्रगाथं विधत्ते—

---

चित्रं देवानामुदगादनीकं०—१-११-१।

इन्द्र क्रतुं न आभरेत्यैन्द्रं प्रगाथं शंसति, इति ।

हे इन्द्र नोऽस्माकं क्रतुमतिरात्राख्यमाभराऽऽनयेत्यस्य पादस्यार्थः ।

द्वितीयमर्धर्चं पठति—

शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहीति, इति ।

पुरुषु बहुषु यागेष्वाहूयमान हे इन्द्र नोऽस्मानस्मिन्नतिरात्रयागरूपे यामनि नियमविशेषे शिक्ष, उपदेशेन प्रवर्तय । जीवास्त्वत्प्रसादेन जीवन्तो वयं ज्योतिरादित्यमण्डलरूपमशीमहि प्राप्नुयाम ।

अत्र ज्योतिःशब्दस्याऽऽदित्यपरत्वात्प्रगाथस्यैन्द्रत्वेऽपि सूर्यमतिक्रम्य शंसनं न भविष्यतीत्येतद्दर्शयति—

असौ वाव ज्योतिस्तेन सूर्यं नातिशंसति, इति ।

अत्रोत्तरस्या ऋचो विष्टारपङ्क्तित्वेऽपि प्रग्रथनेन बृहतीत्वसंपादनाद्बृहतीमतिलङ्घ्य शंसनं न भविष्यतीत्येतद्दर्शयति—

यद्‌ु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति, इति ।

अस्मिन्प्रगाथे पूर्वस्या ऋचः षट्त्रिंशदक्षरत्वात्पादचतुष्टयोपेतत्वाच्च सा स्वभावत एव बृहती । पुनरपि तस्याश्चतुर्थपादमष्टाक्षरं द्विरावर्त्यैतरस्या ऋचः प्रथमार्धेन विंशत्यक्षरेण सह प्रग्रथ्य षट्त्रिंशदक्षरा द्वितीया बृहती संपादनीया। तत्राप्यन्तिमं पादमष्टाक्षरं द्विरावर्त्योत्तरार्धेन विंशत्यक्षरेण सह प्रग्रथ्य तृतीया बृहती संपादनीया । एवं सति बृहत्या अतिक्रमो न भवति ।

प्रगाथान्तरं विधत्ते—

अभि त्वा शूर नोनुम इति राथंतरीं योनिं शंसति राथंतरेण वै संधिनाऽऽश्विनाय स्तुवते तद्यद्राथंतरीं योनिं शंसति रथंतरस्यैव सयोनित्वाय, इति ।

रथंतराख्यं सामाभि त्वा शूरेत्यत्रोत्पन्नम् । तस्माद्रथंतरयोनित्वमुद्गातारो

---

इन्द्र क्रतुं न आभर०—७-३३-२६ । अभि त्वा शूर नोनुमः०—७-३३-२२ ।

---

१ क. ङ. ट. °तीसं° ।

ह्यतिरात्रे रथंतरसामसाध्येनान्तिमेन संधिना स्तोत्रेणाऽऽश्विनशस्त्रप्रदर्शनार्थमेव स्तुवते। अतो रथंतरयोनिशंसने सति स्तोत्रगतस्य रथंतरस्यैव साम्नः सयोनित्वं समानस्थानत्वं संपद्यते।

अत्र सूर्यातिक्रमाभावं दर्शयति—

ईशानमस्य जगतः स्वर्दृशमित्यसौ वाव स्वर्दृक्तेन सूर्यं नातिशंसति, इति।

ईशानमित्यादिकः प्रथमाया ऋचस्तृतीयपादोऽस्य सर्वस्य जगत ईशानं स्वामिनं स्वर्दृशं स्वर्गलोके दृश्यमानमभिनोनुम इति प्रथमपादगतेनान्वयः। अत्र स्वर्दृक्शब्देनासावादित्य एवोच्यते। तेन सूर्यातिक्रमो नास्ति।

पूर्ववद्बृहत्यतिक्रमाभावं दर्शयति—

यदु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति, इति।

प्रगाथान्तरं विधत्ते—

बहवः सूरचक्षस इति मैत्रावरुणं प्रगाथं शंसत्यहर्वै मित्रो रात्रिर्वरुण उभे वा एषोऽहोरात्रे आरभते योऽतिरात्रमुपैति तद्यन्मैत्रावरुणं प्रगाथं शंसत्यहोरात्रयोरेवैनं तत्प्रतिष्ठापयति, इति।

अह्नो मित्रः स्वामी रात्रेश्च वरुणस्तस्मात्तयोस्तद्रूपत्वम्। यो यजमानोऽतिरात्रक्रममनुतिष्ठत्येष पुमानहोरात्रे उभे अभ्युद्दिश्य क्रतुं प्रारभते। उभयोः कालयोरनुध्येयविशेषसद्भावात्। अतो मैत्रावरुणप्रगाथशंसनेनाहोरात्रयोरेव कालयोरेनं यजमानं प्रतिष्ठितं करोति।

पूर्ववदनतिक्रमं दर्शयति—

सूरचक्षस इति तेन सूर्यं नातिशंसति यदु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति, इति।

सूरचक्षस इति श्रूयमाणं सूरपदं सूर्यवाच्यतस्तस्य नातिक्रमः।

पुनरप्यन्ये द्वे ऋचौ विधत्ते—

मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवी विश्व-

---

बहवः सूरचक्षसः०—७–६६–१०। मही द्यौः पृथिवी च नः०—१–२२–१३। ते हि द्यावापृथिवी०—१–१६१–१।

शंभुवेति द्यावापृथिवीये शंसति द्यावापृथिवी वै प्रति-
ष्ठे इयमेवेह प्रतिष्ठाऽसावमुत्र तद्यद्द्यावापृथिवीये शं-
सति प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति, इति ।

मही द्यौरित्येका ते हीति द्वितीया । उभे अप्यृचौ द्यावापृथिवीदेवताके । ते च द्यावापृथिव्यौ सर्वेषां प्राणिनामाधारभूते । इह मनुष्यजन्मनीयमेव पृथिवी प्राणिनामाश्रयः । अमुत्र जन्मान्तरेऽसौ द्युलोक आश्रयः । तथा सति द्यावापृथिवीययोर्ऋचोः शंसनेनोभयोरपि प्रतिष्ठारूपयोर्लोकयोरेनं यजमानं प्रतिष्ठापयति ।

अत्र सूर्यस्यानतिक्रमं दर्शयति—

देवो देवी धर्मणा सूर्यः शुचिरिति तेन सूर्यं नाति-
शंसति, इति ।

उत्तरस्यामृचि देवो देवीत्यस्मिन्पादे सूर्यस्य श्रूयमाणत्वात्तदतिक्रमो नास्ति ।

बृहत्या अनतिक्रमं दर्शयति—

यद्वु गायत्री च जगती च ते द्वे
बृहत्यौ तेन बृहतीं नातिशंसति, इति ।

प्रथमाया गायत्रीछन्दस्त्वाच्चतुर्विंशत्यक्षरत्वम् । द्वितीया जगतीछन्दं-स्काऽष्टाचत्वारिंशदक्षरा[3] मिलित्वा द्वासप्ततिरक्षराणि संपद्यन्ते । तेषां द्वेधा विभागे सति षट्त्रिंशदक्षरे द्वे बृहत्यौ भवतः । तेन बृहत्या अनतिक्रमः ।

अथान्यामेकामृचं विधत्ते—

विश्वस्य देवी मृचयस्य जन्मनो न या
रोषाति न ग्रभदिति द्विपदां शंसति, इति ।

इयमृक्पादद्वयोपेताऽस्मिन्ब्राह्मण एवोक्ता । मृचि धातुर्गत्यर्थः । मर्चयति गच्छतीति गतिमान्प्राणी । विश्वस्य सर्वस्य मृचयस्य गतिमतः प्राणिनो यज्जन्म तस्य जन्मनो देवी स्वामिनी काचिन्निर्ऋतिरूपा मृत्युदेवता विद्यते । या मृत्युदेवताऽस्मासु न रोषाति न कुप्यति न ग्रभनैव गृह्णातीति द्विपदाया ऋचोऽर्थः । तामेतां द्विपदां शंसेत् ।

---

१ ख. °याया ज° । २ ख. °न्दस्कत्वादष्टा° । ३ ख. °क्षरत्वं मि° ।

एतामृचं प्रशंसति—

चितैधमुक्थमिति ह स्म वा एतदाचक्षते यदेतदाश्विनं निर्ऋतिर्ह स्म पाशिन्युपास्ते यदैव होता परिधास्यत्यथ पाशान्प्रतिमोक्ष्यामीति ततो वा एतां बृहस्पतिर्द्विपदामपश्यन्न या रोषाति न ग्रभदिति तया निर्ऋत्याः पाशिन्या अधराचः पाशानपास्यत्तद्यदेतां द्विपदां होता शंसति निर्ऋत्या एव तत्पाशिन्या अधराचः पाशानपास्यति स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय, इति ।

यदेतदाश्विनं शस्त्रमस्ति तदेतच्चितैधमुक्थमिति रहस्याभिज्ञा आचक्षते । चिता एधाः काष्ठसमूहा मनुष्यं दग्धुं यस्मिञ्श्मशाने स्थाने तत्स्थानं चितैधम् । तत्सदृशमिदमुक्थं शस्त्रं यथा श्मशानं दृष्ट्वा जीवनार्थिनो बिभ्यति तद्वदाश्विनं शस्त्रं भयहेतुरित्यर्थः । तत्कथमिति तदेवोच्यते । निर्ऋतिर्मृत्युदेवता सा च पाशिनी पाशहस्ता सत्युपास्ते होतुः समीपे निवसति । केनाभिप्रायेणेति सोऽभिधीयते । यदैवायं होता परिधास्यति शस्त्रसमाप्तिं करिष्यति तदैव बन्धनार्थं पाशानस्मिन्होतरि प्रतिमोक्ष्यामि प्रजेष्यामीति तस्या अभिप्रायः । ततो वै तस्मादेव निर्ऋत्याः परिहरणीयत्वकारणात्तदपाकरणार्थं बृहस्पतिरेतां द्विपदां तत्परिहारहेतुत्वेनापश्यत् । काऽसौ द्विपदेति बक्षिायां तदीयो द्वितीयः पादो न येत्यादिकः प्रदर्शनार्थमुपादीयते । तया द्विपदया पाशहस्तया निर्ऋत्याः सकाशादधराचोऽधो लम्बमानान्पाशान्बृहस्पतिरपास्यत् । द्विपदायां पठ्यमानायां तद्धस्तात्पाशाः पतिता इत्यर्थः । तद्वद्धोताऽपि द्विपदायाः शंसनेन पाशानपास्यति निराकरोति । स्वस्त्येव क्षेमेणैवायं होता निर्ऋतिपाशान्मुच्यते । ततः सर्वायुर्भवति । यजमानस्यापि सर्वायुत्वाय शंसनं संपद्यते ।

वेदनं प्रशंसति—

सर्वमायुरेति य एवं वेद, इति ।

तत्र सूर्यस्यानातिक्रमं दर्शयति—

मृचयस्य जन्मन इत्यसौ वाव मर्चयतीव तेन

**सूर्यं नातिशंसति, इति ।**

द्विपदायां गतिवाची सृचयशब्दोऽस्त्यसौ चाचाऽऽदित्योऽपि सर्चयतीव सर्वदा गच्छत्येव । तेन सूर्याभिधानान्नास्त्यतिक्रमः ।

बृहत्या अनतिक्रमं दर्शयति—

**यदु द्विपदा पुरुषच्छन्दसं सा सर्वाणि च्छन्दांस्य-भ्याप्ता तेन बृहतीं नातिशंसति ॥ १० ॥ इति ।**

यदु यस्मादेव कारणादियं द्विपदा तस्मादेव पुरुषसादृश्यात्पुरुषसंबन्धच्छन्दो भवति । पुरुषश्च सर्वच्छन्दसां प्रयोक्तेति पुरुषद्वारा सा द्विपदा सर्वाणि च्छन्दांस्यभितो व्याप्नोति । तेन बृहत्या अपि व्याप्तत्वान्नास्त्यतिक्रमः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तदशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (१०) [१३१] ।

---

अथाऽऽश्विनस्य समाप्त्यर्थमेकामृचं विधत्ते—

**ब्राह्मणस्पत्यया परिदधाति ब्रह्म वै बृहस्पतिर्ब्रह्मण्येवैनं तदन्ततः प्रतिष्ठापयति, इति ।**

बृहस्पते अति यदर्य इत्येषा ब्राह्मणस्पत्या । बृहस्पतेर्देवेषु ब्राह्मणजातिस्वरूपत्वात् । तेन परिधानेनैतच्छस्त्रं ब्रह्मण्येव ब्राह्मणस्थे बृहस्पतावेव प्रतिष्ठितं भवति ।

नित्यप्रयोगार्थं परिधानीयां विधाय काम्यप्रयोगार्थं विधत्ते—

**एवा पित्रे विश्वदेवाय वृष्ण इत्येतया परिदध्यात्प्रजाकामः पशुकामः, इति ।**

तस्या ऋचस्तृतीयपादमनूद्य व्याचष्टे—

**बृहस्पते सुप्रजा वीरवन्त इति प्रजया वै सुप्रजा वीरवान्, इति ।**

पुत्रादिरूपया प्रजया पिता सुप्रजाः शोभनापत्यो वीरवाञ्शूरभृत्ययुक्तश्च । तेन तृतीयपादोक्तसुप्रजा वीरवन्त इत्येतदुपपन्नम् ।

---

बृहस्पते अति यदर्यो०-२-२४-१६ । एवा पित्रे विश्वदेवाय०-४-५०-६ ।

---

१ क. झ. ट. °योगं वि° ।

चतुर्थपादमनुवदति—

वयं स्याम पतयो रयीणामिति, इति ।

हे बृहस्पते त्वत्प्रसादाद्वयं रयीणां धनानां पतयः स्याम ।

अस्यार्थस्य स्पष्टत्वाद्व्याख्यानमुपेक्ष्य ज्ञानपूर्वकानुष्ठानं प्रशंसति—

प्रजावान्पशुमान्रयिमान्वीरवान्भवति यत्रैवं विद्वानेतया परिदधाति, इति ।

फलान्तरार्थमन्यामृचं विधत्ते—

बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेजस्कामो ब्रह्मवर्चसकामोऽतीव वाऽन्यान्ब्रह्मवर्चसमर्हति, इति ।

अत्र पादे योऽयमतिशब्दस्तत्प्रसादादनुष्ठाताऽन्यपुरुषानतीवातिक्रम्यैवाधिकं ब्रह्मवर्चसमर्हति प्राप्नोतीत्यर्थः ।

द्वितीयपादे प्रथमपदमनूद्य व्याचष्टे—

द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसं भाति, इति ।

द्युमद्विभाति क्रतुमज्जनेष्विति द्वितीयः पादः । ब्रह्मवर्चसविशेषणत्वेन द्युतिमत्पर्यायो द्युमदिति शब्दः प्रयुज्यते । श्रुताध्ययनसंपत्तिरूपं ब्रह्मवर्चसं विद्वत्सभायां द्युमदिव वै प्रकाशयुक्तमेव भूत्वा विभाति सर्वेषामेव भासत इति तस्य पदस्य तात्पर्यम् । एतत्पादशंसने ब्रह्मवर्चसं वीव वै विशेषेणैव भाति ।

तृतीयपादमनूद्य व्याचष्टे—

यद्दीदयच्छवस ऋतप्रजातेति
दीदायेव वै ब्रह्मवर्चसम्, इति ।

अस्मिन्नपि पादे ब्रह्मवर्चसविशेषणत्वेन दीप्यमानत्ववाचकं दीदयदिति पदमस्ति । ब्रह्मवर्चसं दीदायेव वै ब्राह्मणेषु दीप्यत एवेति तस्य पादस्यार्थः ।

---

१ क. ट. °स्य पद° ।

चतुर्थपादमनूद्य व्याचष्टे—

तदस्मासु द्रविणं धेहि चित्रमिति
चित्रमिव वै ब्रह्मवर्चसम्, इति ।

अस्मिन्पादे यच्चित्रविशेषणं तद्युक्तमेव। ब्रह्मवर्चसस्य वेदेन शास्त्रेणाऽऽचारेण च विचित्रत्वात् ।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

ब्रह्मवर्चसी ब्रह्मयशसी भवति यत्रैवं
विद्वानेतया परिदधाति , इति ।

ब्रह्मवर्चसी वृत्तसंपन्नः । ब्रह्मयशसी तन्निमित्तकीर्तियुक्तः ।

उक्तमर्थं निगमयति—

तस्मादेवं विद्वानेतया परिदध्यात्, इति ।

सूर्यस्यानतिक्रमं दर्शयति—

ब्राह्मणस्पत्या तेन सूर्यं नातिशंसति, इति ।

यस्मादियमृग्ब्रह्मणस्पतिदेवताका सूर्यश्च संध्योपासनादौ ब्राह्मणानां स्वामी तस्मान्नातिक्रमः ।

बृहत्या अनतिक्रमं दर्शयति—

यदु त्रिष्टुभं त्रिः शंसति सा सर्वाणि च्छन्दां-
स्यभ्याप्ता तेन बृहतीं नातिशंसति, इति ।

त्रिः प्रथमां त्रिरुत्तमामिति न्यायेन परिधानीयायास्त्रिरावृत्तिरस्तीयं त्रिष्टु-प्त्रिरावर्त्यमाना द्वात्रिंशदधिकशताक्षरा संपद्यते । तेष्वक्षरेषु सर्वच्छन्दसामन्त-र्भावयितुं शक्यत्वादियं सर्वाणि च्छन्दांस्यभितो व्याप्नोत्यतो बृहत्या अपि तद्व्याप्तत्वान्नास्त्यतिक्रमः । यदुक्तं[1] सूत्रकारेण—आश्विनेन ग्रहेण सपुरोळा-शेन चरन्तीति ।

तत्रोभयार्थं द्वे याज्ये विधत्ते—

गायत्र्या च त्रिष्टुभा च वषट्कुर्यात्, इति ।

---

१ ख. तदुक्तं ।

उभा पिबतमश्विनेति गायत्री। अश्विना वायुनेति त्रिष्टुप्। ताभ्यां वषट्कुर्यात्। याज्यात्वेन तदुभयं पठेदित्यर्थः।

तदेतदुभयं प्रशंसति—

ब्रह्म वै गायत्री वीर्यं त्रिष्टुब्ब्रह्म-
णैव तद्वीर्यं संदधाति, इति।

गायत्र्या ब्राह्मणस्य च प्रजापतिमुखजत्वसाम्यादेकत्वम्। त्रिष्टुभो वीर्यहेतुत्वात्तद्रूपत्वम्। तदुभयपाठे सति ब्राह्मण्येन सह वीर्यं संपादयति।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

ब्रह्मवर्चसी ब्रह्मयशसी वीर्यवान्भवति यत्रैवं
विद्वान्गायत्र्या च त्रिष्टुभा च वषट्करोति, इति।

तदुक्तयोर्गायत्रीत्रिष्टुभोः प्रतीकद्वयं दर्शयति—

अश्विना वायुना युवं सुदक्षोभा पिबतमश्विनेति, इति।

अश्विनेत्यादिकं त्रिष्टुभः प्रतीकमुभा पिबतमित्यादिकं गायत्र्याः प्रतीकम्। एते त्रिष्टुब्गायत्र्यौ याज्ये इत्येकः पक्षः।

पक्षान्तरं विधत्ते—

गायत्र्या च विराजा च वषट्कुर्याद्ब्रह्म वै गायत्र्यन्नं
विराड् ब्रह्मणैव तदन्नाद्यं संदधाति, इति।

गायत्र्या ब्रह्मत्वं पूर्वमुक्तम्। विराजोऽन्नसाधनत्वादन्नत्वम्। अतस्तदुभयपाठे सत्यन्नाद्यमाद्यमन्नं ब्राह्मणजात्या संयोजयति।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

ब्रह्मवर्चसी ब्रह्मयशसी भवति ब्रह्माद्यमन्नमत्ति यत्रैवं
विद्वान्गायत्र्या च विराजा च वषट्करोति, इति।

ब्राह्मणेनात्तुं योग्यं पवित्रीभूतं ब्रह्माद्यम्।

तयोर्गायत्रीविराजोः प्रतीकप्रदर्शनपुरःसरमेतं पक्षं निगमयति—

तस्मादेवं विद्वान्गायत्र्या चैव विराजा च

---

उभा पिबतमश्विना०—१–४७–१९। अश्विना वायुना युवं०—३–५८–७।

वषट्कुर्यात्प्र वामन्धांसि मद्यान्यस्थुरुभा पिबतम-
श्विनेत्येताभ्याम् ॥ ११ ॥ इति ।

प्र वामन्धांसीति विराट् । उभा पिबतमिति गायत्री । गायत्र्या चैव विराजा चैवेत्येवकारेण पूर्वोक्तस्य त्रिष्टुप्पक्षस्य व्यावृत्तिः । तस्मादपि विराट्पक्षः प्रशस्त इत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तदशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (११) [१३२] ।

---

अग्निष्टोम उक्थ्यः षोडश्यतिरात्रश्चेत्येवं चतुःसंस्थो ज्योतिष्टोमः सार्धेनाध्यायषोडशकेनाभिहितः । अथैतच्चतुष्टयमुपजीव्य प्रवर्तमानं गवामयननामकं संवत्सरसत्रमभिधातव्यम् । संवत्सरगतेषु षष्ट्यधिकशतत्रयदिवसेष्वेकैकस्मिन्दिवसे पूर्वोक्तानां चतसृणां संस्थानां मध्ये कयाचित्संस्थया युक्तः सोमप्रयोगः सर्वोऽप्यनुष्ठेयः । सोऽयमेकैकदिनसाध्यः सोमप्रयोगो वेदेष्वहःशब्देन व्यवह्रियते । संवत्सरसत्रस्याऽऽद्ये दिवसे कश्चिदतिरात्रसंस्थः सोमप्रयोगोऽनुष्ठेयः । तदनन्तरभाविनि द्वितीये दिवसेऽनुष्ठेयं सोमप्रयोगं विधत्ते—

चतुर्विंशमेतदहरुपयन्त्यारम्भणीयम्, इति ।

चतुर्विंशतिनामकः कश्चित्सोमविशेषः । स च च्छन्दोगैरेवमाम्नायते—"अष्टाभ्यो हिं करोति स तिसृभिः स चतसृभिः स एकया । अष्टाभ्यो हिं करोति स एकया स तिसृभिः स चतसृभिः । अष्टाभ्यो हिं करोति स चतसृभिः स एकया स तिसृभिः" इति । अस्यायमर्थः । स्तोत्रस्याऽऽधारभूते तृचे विद्यमानास्तिस्र ऋच आवृत्तिविशेषेण चतुर्विंशतिसंख्याका ऋचः कर्तव्याः । सा चाऽऽवृत्तिस्त्रिभिः पर्यायैः संपद्यते । तत्र प्रथमे पर्याये प्रथमामृचं त्रिरभ्यस्य स उद्गाता ताभिस्तिसृभिर्गायेत् । द्वितीयामृचं चतुर्वारमभ्यस्य ताभिश्चतसृभिर्गायेत् । तृतीयाया ऋचः सकृदेव पाठो न चाऽऽवृत्तिः । एवं प्रथमपर्यायेऽष्टौ ऋचः संपद्यन्ते । ताभिर्हिं करोत्युद्गायेत् । द्वितीयपर्याये प्रथमायाः सकृत्पाठः । द्वितीयायास्त्रिरावृत्तिः । तृतीयायाश्चतुरावृत्तिरित्येवमत्राप्यष्टौ संपद्यन्ते । तृतीयपर्याये प्रथमायाश्चतुरावृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयाया-

---

प्र वामन्धांसि मद्यानि०—७-६८-२ ।

---

१ ख. 'तीयादिदि' ।

त्रिराद्वत्तिरित्येवमत्राप्यष्टौ संपद्यन्ते । तत्सर्वं मिलित्वा चतुर्विंशतिसंख्या ऋचो भवन्ति । सोऽयं चतुर्विंशतिस्तोमोऽनेन स्तोत्राणि यस्मिन्नहनि निष्पाद्यन्ते तदहश्चतुर्विंशमेतदहरुपयन्त्यनुतिष्ठेयुः । अत्र सर्वेषु सर्वत्रोपयन्त्यासत इति शब्दावनुष्ठानपरावेताभ्यां विधानमेव सत्रत्वलिङ्गम् । तत्र ये यजमानास्त ऋत्विज इति श्रुत्यन्तरादृत्विजां सर्वेषां यजमानत्वेनोपयन्तीति बहुवचनम् । तस्यैतस्याह्न आरम्भणीयमिति नामधेयम् ।

तस्यैतस्य नाम्नो निर्वचनं दर्शयति—

एतेन वै संवत्सरमारभन्त एतेन स्तोमांश्च च्छन्दांसि चैतेन सर्वा देवता अनारब्धं वैतच्छन्दोऽनारब्धा सा देवता यदेतस्मिन्नहनि नाऽऽरभन्ते तदारम्भणीयस्याऽऽरम्भणीयत्वम्, इति ।

एतेनैव चतुर्विंशेनाह्ना सत्रिणः संवत्सरसत्रमारभन्ते । तत्र सामगैः प्रयोक्तव्या ये स्तोमा बह्वृचैः प्रयोक्तव्यानि यानि च्छन्दांसि याश्च तत्तन्मन्त्रप्रतिपाद्याः सर्वा देवतास्तत्सर्वमनेनैवाह्नाऽऽरभन्ते । यदि कथंचिदेतस्मिन्नहनि च्छन्दो वा देवतान्तरं वा नाऽऽरभेरंस्तदानीमन्यस्मिन्नहन्यारब्धमपि च्छन्दोदेवतादिकमनारब्धसदृशमेव भवति । तस्मादस्मिन्नेवाहनि सर्वस्य मुख्यः प्रारम्भः । तथा सत्यारभ्यते सर्वस्मिन्नहनीति व्युत्पत्त्याऽऽरम्भणीयं नाम संपन्नम् । यद्यप्येतस्मादह्नः पूर्वभाविनि प्रायणीयाख्येऽहनि सत्रं प्रारब्धं तथाऽपि तस्य प्रायणीयस्यातिरात्रसंयुक्तस्य संवत्सरोपक्रमसाधारणत्वादस्य सत्रस्य विशेषेण प्रारम्भोऽस्मिन्नेव भवतीत्यभिप्रेत्यैतस्याऽऽरम्भणीयत्वमेव युक्तम् (१) ।

अस्मिन्नहनि स्तोमविशेषं विधत्ते—

चतुर्विंशस्तोमो भवति तच्चतुर्विंशस्य चतुर्विंशत्वम्, इति ।

यान्यत्र स्तोत्राणि सन्ति तेषु सर्वेषु यः पूर्वमुदाहृतश्चतुर्विंशातिसंख्यासंपादनरूपः स्तोमः स एव कर्तव्यः । ईदृशस्तोमयोगादेवाह्नोऽपि चतुर्विंशनाम संपन्नम् ।

तं स्तोमं प्रशंसति—

चतुर्विंशतिर्वा अर्धमासा अर्धमासश एव

तत्संवत्सरमारभन्ते, इति ।

द्वादशसु मासेषु विद्यमाना अर्धमासाश्चतुर्विंशतिसंख्याकाः । तथा सत्य-र्धमासशब्द एकमर्धमासं समाप्य पुनरप्यपरोऽर्धमास इत्येवं क्रमेण चतु-र्विंशतिसंपत्तौ संवत्सरसत्रप्रारम्भो भवति । तस्माच्चतुर्विंशस्तोमः प्रशस्त एतस्मिन्नहनि ।

सोमयागस्य संस्थाविशेषं विधत्ते—

उक्थ्यो भवति पशवो वा
उक्थानि पशूनामवरुद्ध्यै, इति ।

अग्निष्टोमादूर्ध्वभावी योऽयमुक्थ्योऽस्ति सोऽस्मिन्नहनि प्रयोक्तव्यः । तत्र द्वादशस्तोत्रेभ्य उत्तराणि त्रीण्युक्थनामकानि स्तोत्राणि। तेषां पशुप्राप्तिहेतुत्वा-त्पशुत्वम् । अत उक्थ्यानुष्ठानं पशुप्राप्तये भवति ।

तस्मिन्नहनि चोदकप्राप्तस्तोत्रशस्त्रसंख्यां प्रशंसति—

तस्य पञ्चदश स्तोत्राणि भवन्ति पञ्चदश शस्त्राणि
स मासो मासश एव तत्संवत्सरमारभन्ते, इति ।

मासगतानां दिवसानां त्रिंशत्त्वात्स्तोत्रशस्त्रसंख्यायाश्च तथात्वान्मा-सत्वसंपत्तिः । मासश एकैकमासक्रमेणेत्यर्थः ।

स्तोत्रगतानामृचां संख्यां प्रशंसति—

तस्य षष्टिश्च त्रीणि च शतानि
स्तोत्रियास्तावन्ति संवत्सरस्याहान्य
हःश एव तत्संवत्सरमारभन्ते, इति ।

एकैकस्य स्तोत्रस्य चतुर्विंशतिसंख्याया वृत्तत्वात्तत्रत्याः स्तोत्रयोग्या ऋचश्चतुर्विंशतिः संपद्यन्ते । तथा सति दशसु स्तोत्रेषु चत्वारिंशदधिकं शत-द्वयम्।पञ्चसु स्तोत्रेषु विंशत्यधिकमेकं शतमेतदुभयं मिलित्वा षष्ट्यधिकशतत्र-यसंख्याकाः स्तोत्रियाः संपद्यन्ते । संवत्सरसंबन्धीन्यहान्यपि तत्संख्याकानि तथा सत्यहःशोऽहःक्रमेणैव संवत्सरसत्रमारभन्ते । तदेवमुक्तपक्ष उपपादितः ।

अथ पक्षान्तरं विधत्ते—

अग्निष्टोम एतदहः स्यादित्याहुरग्निष्टोमो वै
संवत्सरो न वा एतदन्योऽग्निष्टोमादहर्दाधार न

विंध्याचेति, इति।

यदिदं द्वितीयमहः सोऽग्निष्टोमः कर्तव्यः। अग्निष्टोमस्य संवत्सरसत्ररूपत्वात्। कथमिति चेत्तदुच्यते। अग्निष्टोमादन्य उक्थ्यादिरूपः कश्चिदपि क्रतुः संवत्सरसत्रावयवभूत एतदहर्नैव दाधार नैव धारयितुं शक्तः। अनुपादिष्टान्यङ्गानि सर्वाण्यग्निष्टोमादतिदिश्यन्ते तदेतदग्निष्टोमस्य धारयितृत्वम्। तस्मादग्निष्टोमव्यतिरिक्तः क्रतुरेतदहर्न विंध्याच विवेक्तुमनुष्ठापयितुं न शक्त इत्येवं पक्षान्तरवादिनामभिप्रायः।

अस्मिन्पक्षे स्तोमविशेषं विधत्ते—

स यद्यग्निष्टोमः स्यादष्टाचत्वारिंशास्त्रयः पवमानाः स्युश्चतुर्विंशानीतराणि स्तोत्राणि तदु षष्टिश्चैव त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहःश एव तत्संवत्सरमारभन्ते, इति।

अग्निष्टोमपक्षे बहिष्पवमानमाध्यंदिनपवमानार्भवपवमानेषु त्रिषु स्तोत्रेष्वष्टाचत्वारिंशनामकः स्तोमः कर्तव्यः। स च च्छन्दोगैरेवमाम्नातः—'षोडशभ्यो हिं करोति स तिसृभिः स द्वादशभिः स एकया। षोडशभ्यो हिं करोति स एकया स तिसृभिः स द्वादशभिः। षोडशभ्यो हिं करोति स द्वादशभिः स एकया स तिसृभिः' इति। प्रथमे पर्याये प्रथमाया ऋचस्त्रिरावृत्तिः। द्वितीयाया द्वादशकृत्व आवृत्तिः। तृतीयायाः सकृत्पाठः। द्वितीयपर्याये प्रथमायाः सकृत्पाठो द्वितीयायास्त्रिरावृत्तिस्तृतीयाया द्वादशकृत्व आवृत्तिः। तृतीयपर्याये प्रथमाया द्वादशकृत्व आवृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयायास्त्रिरावृत्तिर्मिलित्वाऽष्टाचत्वारिंशत्स्तो(स्तो?)त्रियाः संपद्यन्ते। सोऽयमष्टाचत्वारिंशत्स्तोमः। तमेतं पवमानेषु त्रिषु कृत्वा शिष्टेषु नवसु स्तोत्रेषु चतुर्विंशस्तोमं कुर्यात्। तथा सति पवमानस्तोत्रेषु चतुश्चत्वारिंशदधिकशतसंख्याकाः स्तोत्रियाः संपद्यन्ते। इतरस्तोत्रेषु षोडशाधिकशतद्वयसंख्याकास्ततो मिलित्वा षष्ट्यधिकशतत्रयसंख्याका भवन्ति। संवत्सरगतानामह्नामपि तावत्त्वादहःक्रमेणैव संवत्सरमारभन्ते।

एवं पक्षद्वयमुपन्यस्य तयोः समविकल्पत्वमभिमेत्य पुनरपि पूर्वोक्तमुक्थ्यमुपन्यस्यति—

उक्थ्य एव स्यात्पशुसमृद्धो यज्ञः पशुसमृद्धं सत्रं

सर्वाणि चतुर्विंशानि स्तोत्राणि प्रत्यक्षाद्ध्येतदह-
श्चतुर्विंशं तस्मादुक्थ्य एव स्यात् ॥ १२ ॥ इति ।

उक्थ्यस्तोत्राणां पशुसाधनत्वादुक्थ्यो यज्ञः पशुसमृद्धः सत्रं च पशुसमृद्धं कर्तव्यम् । किंचोक्थ्यपक्षे सर्वाणि स्तोत्राणि चतुर्विंशस्तोमकानि । अग्निष्टोमपक्षे पवमानव्यतिरिक्तान्येव । तथा सति प्रत्यक्षान्मुख्यवृत्त्यैवैतदहश्चतुर्विंशं भवति । संख्यान्तरस्य कुत्राप्यप्रविष्टत्वात् । तस्मादुक्थ्य एव कार्यः । एवशब्दो विकल्पार्थः । अग्निष्टोम इदमहरुक्थ्यो वेति सूत्रकारवचनात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तदशाध्याये षष्ठः खण्डः ॥ ६ ॥ (१२) [१३३] ।

---

पृष्ठस्तोत्रे चोदकप्राप्तं विकल्पितं सामद्वयमनूद्य प्रशंसति—

बृहद्रथंतरे सामनी भवत एते वै यज्ञस्य नावौ संपारिण्यौ यद्बृहद्रथंतरे ताभ्यामेव तत्संवत्सरं तरन्ति, इति ।

त्वामिद्धि हवामहे [६-४६-१] इत्यस्यामृच्युत्पन्नं साम बृहत् । अभि त्वा शूर नोनुमः [७-३२-२२] इत्यस्यामृच्युत्पन्नं रथंतरम् । एते उभे अपि यज्ञाख्यस्य समुद्रस्य सम्यक्परतीरप्राप्तिसाधनभूते नावौ । संवत्सरसत्रस्य समुद्ररूपत्वं शाखान्तरे दर्शितम्—' समुद्रं वा एते प्लवन्ते ये संवत्सरमुपयन्ति ' इति । तथा सति तत्पारनयनहेत्वोः साम्नोर्नौरूपत्वं युक्तम् । अतो बृहद्रथंतररूपाभ्यां नौभ्यामेव संवत्सरं(र)सत्ररूपं समुद्रं तरन्ति । गवामयनस्य पारं गच्छन्तीत्यर्थः ।

प्रकारान्तरेण प्रशंसति—

पादौ वै बृहद्रथंतरे शिर एतदहः पादाभ्यामेव तच्छ्रियं शिरोऽभ्यायन्ति, इति ।

यथा मनुष्यस्य पादौ तथा सत्रस्य बृहद्रथंतरे सामनी । एतच्चाऽऽरम्भणीयमहः शिरःस्थानीयम् । ततो यथा लोके पुरुषाः पादाभ्यामेव देशान्तरात्स्वगृहे गत्वा तत्र शिरोऽभिलक्ष्याभ्यङ्गंकर्णाभरणादिरूपां श्रियमायन्ति प्राप्नुवन्ति, एवमेते सत्रिणः सामभ्यामेतदहः प्राप्नुवन्ति ।

---

१ ख. °प्रतिष्ठत्वा° । २ ख. °ङ्गकरणाभ° ।

पुनरपि प्रकारान्तरेण प्रशंसति—

पक्षौ वै बृहद्रथंतरे शिर एतदहः पक्षाभ्यामेव तच्छ्रियं शिरोऽभ्यायुवते, इति ।

यथा लोके पक्षी पक्षाभ्यामेवाऽऽकाशे संचरञ्शिरोऽभिलक्ष्य नानाविधदिग्दर्शनरूपां श्रियं मिश्रयत्येवमत्रापि सामभ्यामेतस्मिन्नहनि श्रियमनुष्ठानरूपां सत्रिणो युवते मिश्रयन्ति ।

सामद्वयस्य परित्यागं निषेधति—

ते उभे न समवसृज्ये य उभे समवसृजेयुर्यथैव च्छिन्ना नौर्बन्धनात्तीरं तीरमृच्छन्ती प्लवेतैवमेव ते सत्रिणस्तीरं तीरमृच्छन्तः प्लवेरन्य उभे समवसृजेयुः, इति ।

उभे सामनी न समवसृज्ये न परित्याज्ये। एकस्याप्यननुष्ठानमुभयपरित्यागः। ये सत्रिणोऽनभिज्ञाः सन्त उभयं परित्यजन्ति तेषां छिन्ननौसादृश्यं प्रसज्येत। लोके हि नाविकः सायंकाले नावं कयाचिद्रज्ज्वा तीरस्थे स्थाणौ बध्नाति । यदा प्रवाहवेगाद्रात्रौ सा रज्जुस्त्रुट्यति तदानीं बन्धनस्थाणोश्छिन्ना नौः प्रवाहवेगेनेतस्ततो नीयमाना परतीरमर्वाक्तीरं च पुनः पुनः प्राप्नुवती रक्षकाभावात्प्लवेत यत्र क्वापि गच्छेत् । एवमेव ते सत्रिणः सामद्वयाभावे तत्तीरसदृशानहर्विशेषानृच्छन्तोऽनुतिष्ठन्तोऽपि प्लवेरन्विनश्येयुरित्यर्थः । ये सामद्वयमपि परित्यजन्ति तेषामेवायं दोष इति दर्शयितुमुभे समवसृजेयुरिति पुनराभिधानम् ।

उभयोः साम्नोर्विकल्पितत्वादेकपरित्यागे दोषो नास्तीत्येतद्दर्शयति—

तद्यदि रथंतरमवसृजेयुर्बृहतैवोभे अनवसृष्टे अथ यदि बृहदवसृजेयू रथंतरेणैवोभे अनवसृष्टे, इति ।

तत्तयोः साम्नोर्मध्ये यदा रथंतरं परित्यजेयुर्बृहदेवानुतिष्ठेयुस्तदा बृहतैव प्रयोगसंपूर्तेः फलत उभयमप्यपरित्यक्तमेव भवति । एवं बृहत्परित्यागपक्षेऽपि रथंतरेणैव संपूर्तिः ।

प्रकारान्तरेण सामद्वयं प्रशंसति—

यद्वै रथंतरं तद्वैरूपं यद्बृहत्तद्वैराजं यद्रथंतरं तच्छाक्वरं

यद्बृहत्तद्रैवतमेवमेते उभे अनवसृष्टे भवतः, इति ।

पृष्ठ्यषडहे षट्स्वपि दिवसेषु क्रमेण पृष्ठस्तोत्रनिष्पादकानि षट् सामानि रथंतरं वैरूपं बृहद्वैराजं शाक्वरं रैवतमिति । तत्र रथंतरस्य बृहतश्चोत्पत्तिस्थानं पूर्वमुक्तम् । यद्याव इन्द्र ते शतम् [ ८-७०-५ ] इत्यस्यामृच्युत्पन्नं वैरूपं साम । पिबा सोममिन्द्र मन्दतु त्वा [ ७-२२-१ ] इत्यस्यामृच्युत्पन्नं वैराजं साम । प्रोष्वस्मै पुरोरथम् [ १०-१३३-१ ] इत्यस्यां गीयमानं शाक्वरं साम । रेवतीर्नः सधमादे [ १-३०-१३ ] इत्यस्यां गीयमानं रैवतं साम । तत्र बृहद्रथंतरयोरेवात्रोत्तरस्थानीयत्वादशेषसामफलसिद्ध्यर्थमेते उभे अपरित्यक्ते एव भवतः। उभयपरित्यागः सर्वथा न योग्य इत्यर्थः ।

उक्तस्याह्नोऽनुष्ठानं प्रशंसति—

ये वा एवं विद्वांस एतदहरुपयन्त्याप्त्वा वै तेऽहःशः संवत्सरमाप्त्वाऽर्धमासश आप्त्वा मासश आप्त्वा स्तोमांश्च च्छन्दांसि चाऽऽप्त्वा सर्वा देवतास्तप एव तप्यमानाः सोमपीथं भक्षयन्तः संवत्सरमभिषुण्वन्त आसते, इति ।

ये सत्रिणः पूर्वोक्तप्रकारेणैतस्याह्नो महिमानं विद्वांस एतदहरनुतिष्ठन्ति ते सत्रिणः संवत्सरसत्रमहर्द्वारेणार्धमासद्वारेण मासद्वारेण स्तोमच्छन्दोद्वारेण सर्वदेवताद्वारेण प्राप्य तपश्चरन्तो निर्विघ्नं सोमपानं कुर्वन्तः संवत्सरमपि नैरन्तर्येण सोममभिषुण्वन्त आसते । विघ्नः कोऽपि न भवतीत्यर्थः ।

अथ सत्रगतस्योत्तरपक्षस्य प्रत्यवरोहं विधत्ते—

ये वा अत ऊर्ध्वं संवत्सरमुपयन्ति गुरुं वै ते भारमभिनिदधते स वै गुरुर्भारः शृणात्यथ य एनं परस्तात्कर्मभिराप्त्वाऽवस्तादुपैति स वै स्वस्ति संवत्सरस्य पारमश्नुते ॥ १३ ॥ इति ।

ये वै केचन[1] मन्दबुद्धयः सत्रिणोऽत आरम्भणीयं चतुर्विंशमहः प्रारभ्योर्ध्वमानुलोम्येनैतत्संवत्सरसत्रमुपयन्ति, अनुतिष्ठन्ति ते सत्रिणो गुरुं वै[2] प्रौढमेव भारमभिनिदधते स्वस्योपरि स्थापयन्ति। स वै गुरुर्भारः स एव शृणाति

१ ग. घ. ङ. च. छ. झ. ढ. सं । २ क. 'नैव संव' ।

भारवाहकान्सत्रिणो विनाशयति। 'अथ पूर्वोक्तवैलक्षण्येन सत्रिण एनं संवत्सरं परस्तादादित आरभ्य विहितैः कर्मभिः पूर्वपक्षगतैराप्त्वाऽनुष्ठायोत्तरपक्षेऽवस्तात्प्रत्यवरोहक्रमेणोपैति, उपयन्त्यनुतिष्ठन्ति। स वै त एव सत्रिणः स्वस्ति क्षेमेण संवत्सरसत्रस्य पारं समाप्तिमश्नुते प्राप्नुवन्ति। अयमर्थः। अस्ति किंचिद्विषुवनामकं संवत्सरसत्रस्य मध्ये प्रधानमहः। तस्याधस्तात्षण्मासाः। सोऽयं प्रथमः पक्षः। उपरिष्टादपि षण्मासाः सोऽयमुत्तरः पक्षः। यथा लोके कस्याश्चिच्छालायाः स्तम्भयोः पूर्वं दीर्घं वंशं प्रौढं प्रसार्योभयोः पार्श्वयोः पक्षद्वयं कुर्वन्ति। एवं संवत्सरसत्रस्यापि। तथा च शाखान्तरे श्रूयते—'यथा शालायै पक्षसी मध्यमं वꣳशमभिसमायच्छति, एवꣳ संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसंतन्वन्ति' इति। दिवैव मन्त्राणां कीर्तनीयत्वाद्विषुवनामकमेकं दिवाकीर्त्यम्। तत्र पूर्वपक्षरूपे मासषट्के यः प्रयोगक्रम एवमुत्तरपक्षेऽपि। मासषट्केऽपि तेनैव क्रमेण स प्रयोगो यद्यनुष्ठीयेत तदानीमतिभारः स्यात्। नूतनानुष्ठानविशेषाभावेनाऽऽलस्ये सति वैकल्यं भवति स एव भार इत्युच्यते। अतस्तत्परिहारार्थं पूर्वेषु षट्सु मासेषु यानि कर्माणि येनाऽऽनुपूर्व्येणानुष्ठितानि तानि कर्माण्युत्तरेषु मासेषु तद्विपरीतक्रमेणानुष्ठेयानि। तथा सत्यालस्याभावादविघ्नेनैव संवत्सरसत्रं समाप्यत इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तदशाध्याये सप्तमः खण्डः॥ ७॥ (१३) [१३४]।

———

अथास्मिन्नारम्भणीये चतुर्विंशेऽहनि निष्केवल्यशस्त्रे कंचिद्विशेषं विधत्ते—

यद्वै चतुर्विंशं तन्महाव्रतं बृहद्दिवेनात्र होता
रेतः सिञ्चति तददो महाव्रतीयेनाह्ना प्रजन-
यति संवत्सरे संवत्सरे वै रेतः सिक्तं जायते
तस्मात्समानं बृहद्दिवो निष्केवल्यं भव-
त्येष ह वा एनं परस्तात्कर्मभिराप्त्वाऽव-
स्तादुपैति य एवं विद्वानेतदहरुपैति, इति।

यदेतद्द्वितीयं चतुर्विंशमहस्तदेव संवत्सरसत्रस्योपान्त्यं महाव्रताख्यमहर्भवति। आरोहक्रमेण चतुर्विंशाख्यं पूर्वपक्षगतं द्वितीयमहरवरोहक्रमेण महाव्रताख्यमुपान्त्यत्वाद्द्वितीयमहर्भवति। अनेन द्वितीयत्वसाम्येन तयोः परस्परमैक्यमुपचर्यते।

किंचोभयत्र बृहद्दिवसाम्यमस्ति तदिदास भुवनेषु ज्येष्ठम् [ १०-१२०-१ ] इत्येतत्सूक्तं बृहद्दिवशब्देन विवक्षितम् । प्रौढस्य द्युलोकस्य प्राप्तिहेतुत्वात् । एतदेवोभयत्र निष्केवल्यशस्त्रे क्रियते । तथा सत्यस्मिन्द्वितीयेऽह्नि चतुर्विंशनामके बृहद्दिवनाम्ना तदिदासेत्यादिना निष्केवल्यशस्त्रगतसूक्तेन होता रेतः सिञ्चति तदहः । तदेतत्सिक्तं रेतो महाव्रतीयेनोपान्त्येनाह्ना बृहद्दिवाख्यनिष्केवल्यसूक्तयुक्तेन प्रजनयति । अत्र सत्रसंवत्सरमध्य एव रेतःसेकः प्रजननं च द्वितीयोपान्त्यदिवसयोः संपन्नम् । ततो लोकेऽप्येकैकस्मिन्संवत्सरे रेतःसेक उत्पत्तिश्चेत्युभयं संपद्यते । यस्माद्द्वितीयोपान्त्ययोरह्नोरुभयोरपि मिलित्वा प्राणिनो जन्मरूपमेकं कार्यमपेक्षितं तस्माद्बृहद्दिवनामकेन सूक्तेनोभयत्र निष्केवल्यशस्त्रं समानमेकरूपं कर्तव्यम् । यः पुमानेवं महाव्रताहसाम्येनात्र सत्रार्थे निष्केवल्यकर्तव्यतां विद्वानेतद्द्वितीयमहरनुतिष्ठति स पुमान्परस्तात्सत्रस्य प्रथमभाग आनुलोम्येन क्रियमाणैः कर्मभिराप्त्वा प्राप्यावस्तादपरभागे प्रातिलोम्येनैव संवत्सरमनुतिष्ठति ।

वेदनं प्रशंसति—

स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद, इति ।

अथ संवत्सरसत्रस्याऽऽद्यन्ते द्वे अहनी विधत्ते—

यो वै संवत्सरस्यावारं च पारं च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुतेऽतिरात्रो वा अस्य प्रायणीयोऽवारमुदयनीयः पारम्, इति ।

यः पुमान्संवत्सरसत्रस्य समुद्रस्थानीयस्यावारमर्वाक्तीरस्थानीयं प्रथममहः पारं परतीरस्थानीयमन्तिममहर्यो वे( हर्वे )द तयोरह्नोरनुष्ठेयं कर्तव्यं निश्चिनोति स पुमानविघ्नेनैव संवत्सरसत्रस्य पारं समाप्तिं प्राप्नोति । योऽयमतिरात्रसंस्थः स एवास्य प्रायणीय आरम्भेऽनुष्ठेयत्वादर्वाक्तीरस्थानीयः । स एवातिरात्रः पुनरुदयनीयः समाप्तावनुष्ठेयत्वात्परतीरस्थानीयः ।

वेदनं प्रशंसति—

स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद, इति ।

उक्तावाद्यन्तावतिरात्रौ प्रशंसति—

यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुतेऽतिरात्रो वा अस्य

प्रायणीयोऽवरोधनमुदयनीय उद्बोधनम्, इति।

अवरुध्यते स्वाधीनं क्रियते येन प्रारम्भरूपेण कर्मणा तत्कर्मावरोधनम्। उद्बुध्यते समाप्यते येन कर्मणा तदुद्बोधनमन्यत्पूर्ववत्।

वेदनं प्रशंसति—

स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद, इति।

पुनरपि प्रकारान्तरेण प्रशंसति—

यो वै संवत्सरस्य प्राणोदानौ वेद स वै स्वस्ति संवत्सरस्य पारमश्नुतेऽतिरात्रौ वा अस्य प्रायणीयः प्राण उदान उदयनीयः, इति।

प्रायणीयोऽतिरात्रः प्रशब्दसामान्यात्प्राण इत्युच्यते। उच्छब्दसामान्या-दुदयनीयोऽतिरात्र उदानः।

वेदनं प्रशंसति—

स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद य एवं वेद ॥ १४ ॥ इति।

अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये सप्तदशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ (१४) [१३५]।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधर-सायणाचार्यकृतावैतरेयब्राह्मणभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

---

अथाष्टादशोऽध्यायः।

---

आश्विनस्य विधिः प्रातरनुवाक उदीरितः।
संख्याप्रतिपदावन्ये सौर्यादीन्यधिकानि तु ॥

तत्र गवामयनस्य प्रायणीयोदयनीयावाद्यन्तावतिरात्रावुक्तावथ मासक्लृ-प्तिविधानायाभिप्लवषडहे पूर्वभागरूपाणि त्रीण्यहानि विधत्ते—

ज्योतिर्गौरायुरिति स्तोमैभिर्यन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसौ लोक आयुः, इति।

स्तोमशब्दो ज्योतिरादिभिः प्रत्येकमभिसंबध्यते । तथा सति ज्योतिष्टोमो गोष्टोम आयुष्टोम इत्येतैरहोभिर्यन्ति । अनुतिष्ठेयुरित्यर्थः । तदेतदहस्त्रयं त्रित्वसाम्यात्क्रमेण लोकत्रयरूपम् । शाखान्तरेऽप्येतद्दर्शितम्—'ज्योतिष्टोमं प्रथममुपयन्त्यस्मिन्नेव तेन लोके प्रतितिष्ठन्ति । गोष्टोमं द्वितीयमुपयन्त्यन्तरिक्ष एव तेन प्रतितिष्ठन्ति । आयुष्टोमं तृतीयमुपयन्त्यमुष्मिन्नेव लोके प्रतितिष्ठन्ति' इति ।

षडहे पूर्वभागं त्र्यहमुक्त्वा तदुत्तरभागं विधत्ते—

स एवैष उत्तरस्त्र्यहः, इति ।

त्रयाणां पूर्वोक्तानामेवाह्नां समूहः पुनरनुष्ठीयमान उत्तरस्त्र्यहो भवति ।

तत्र षडहे षण्णामप्यह्नां क्रमं दर्शयति—

ज्योतिर्गौरायुरिति त्रीण्यहानि गौरायुर्ज्योतिरिति त्रीणि, इति ।

ज्योतिष्टोमादीनामेव ज्योतिरित्यादीनि नामानि । तैर्नामभिर्धर्मा अतिदिश्यन्ते । ज्योतिरादिनामका ये स्वतन्त्रा एकाहाः सन्ति तदीयधर्मा अत्रानुष्ठेया इत्यर्थः ।

योऽयमुभयोस्त्र्यहयोः क्रमव्यत्यास[स्त]मिमं प्रशंसति—

अयं वै लोको ज्योतिरसौ लोको ज्योतिस्ते एते ज्योतिषी उभयतः संलोकेते, इति ।

प्रथमस्य त्र्यहस्याऽऽदौ ज्योतिर्नामकमहर्यदस्ति तत्प्राथम्यसाम्याद्भूलोकस्वरूपम् । यच्चोत्तरस्य त्र्यहस्यावसाने ज्योतिर्नामकमहस्तदुत्तमत्वसाम्याद्द्युलोकस्वरूपम् । ते एते षडहस्याऽऽद्यन्तयोर्वर्तमाने ज्योतिषी उभयतोऽवस्थाय परस्परं संलोकेते संमुखत्वेनेक्षेते ।

अहर्विशेषांस्तत्क्रमं चोक्त्वा समष्टिरूपं षडहं विधत्ते—

तेनैतेनोभयतोज्योतिषा षळहेन यन्ति तद्यदेतेनोभयतोज्योतिषा षळहेन यन्त्यनयोरेव तल्लोकयोरुभयतः प्रतितिष्ठन्तो यन्त्यस्मिंश्च लोकेऽमुष्मिंश्चोभयोः, इति ।

उभयत आद्यन्तयोर्ज्योतिर्नामकमहर्यस्मिन्षडहे तदेतदुभयतोज्योतिस्तेनैतेन

षडहेनानुतिष्ठेयुः। तदनुष्ठानेनोभयतो वर्तमानयोः प्रतिष्ठां प्रापयन्ति वर्तन्ते। लोकयोरुभयत इत्यस्यैव विवरणमस्मिंश्च लोकेऽमुष्मिंश्चोभयोरिति। अथवोत्तरशेषत्वेनास्मिंश्चेत्यादिकमन्वेतव्यम्।

अस्मिन्नभिप्लवषडहे संस्थाविशेषान्विधत्ते—

परियद्वा एतद्देवचक्रं यदभिप्लवः षळह-
स्तस्य यावभितोऽग्निष्टोमौ तौ प्रधी ये
चत्वारो मध्य उक्थ्यास्तन्नभ्यम्, इति।

योऽयमभिप्लवः षडहस्तदेतदस्मिंश्चामुष्मिंश्चोभयोर्लोकयोः परियद्वै परिवर्तमानमेव देवचक्रम्। यथा लोके रथस्य चक्रं पुनः पुनः परिवर्तते तद्वदिदं देवचक्रमसकृत्षडहं परिवर्तनस्य वक्ष्यमाणत्वात्। रथचक्रस्य हि निष्पादकानि त्रीणि फलकानि। तत्र मध्यमफलकेऽरुं प्रवेशयितुं प्रौढं नाभिच्छिद्रं क्रियते। तस्य फलकस्योभयोः पार्श्वयोर्वर्तुलत्वाय फलकद्वयं कीलितं भवति। एवमस्मिन्नपि षडहे ज्योतिर्गावायुन्तवर्तिनावग्निष्टोमसंस्थौ प्रधी भवतः। प्रकर्षेणोभयतो धीयेते स्थाप्येते इति प्रधी। फलकद्वयस्थानीयावित्यर्थः। एतस्मिन्ये तु मध्ये चत्वारोऽहर्विशेषा उक्थ्यसंस्थास्तदेतन्नभ्यं नाभियोग्यस्थानमुक्थ्यसंस्थाः कर्तव्या इत्यर्थः।

वेदनं प्रशंसति—

गच्छति वै वर्तमानेन यत्र कामयते तत्स्दस्ति सं-
वत्सरस्य पारमश्नुते य एवं वेद, इति।

वेदिता यत्र यस्मिँल्लोके गन्तुं कामयते तत्रानेनैव परिवर्तमानेन देवचक्रेण गच्छति। तत्तेन देवचक्रेण निर्विघ्नमेव संवत्सरसत्रसमाप्तिं गच्छति।

उक्तस्याभिप्लवषडहस्यैकस्मिन्मासि पञ्चकृत्व आवृत्तिं विधत्ते—

यो वै तद्वेद यत्प्रथमः षळहः स वै स्वस्ति संवत्स-
रस्य पारमश्नुते यस्तद्वेद यद्द्वितीयो यस्तद्वेद यत्तृ-
तीयो यस्तद्वेद यच्चतुर्थो यस्तद्वेद यत्पञ्चमः ॥ १५ ॥ इति।

प्रथमः षडह इति यदस्ति तद्यो वेद स पुमान्निर्विघ्नेन सत्रपारं प्राप्नोति। तथा द्वितीयः षडह इति यदस्ति तद्यो वेद स वै स्वस्तीत्यादिकमनुवर्तनी-

यम् । एवमुत्तरेष्वपि त्रिषु पर्यायेषु द्रष्टव्यम् । षडहे पञ्चकृत्व आवर्त(र्त्य?)-मानं सति त्रिंशदहानि भूत्वा मासः संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टादशाध्याये प्रथमः खण्डः ॥ १ ॥ (१५) [१३६] ।

---

उक्तेषु पञ्चसु षडहेषु प्रथममनूद्य प्रशंसति—

प्रथमं षळहमुपयन्ति षळहानि भवन्ति षड्वा ऋतव ऋतुश एव तत्संवत्सरमाप्नुवन्त्यृतुशः संवत्सरे प्रतितिष्ठन्तो यन्ति, इति ।

अनुष्ठिते षडहे षट्संख्याकान्यहानि भवन्ति । ततः संख्यासाम्यादृतुद्वारा संवत्सरं प्राप्य तत्र प्रतिष्ठिताः सन्तो वर्तन्ते ।

पूर्वेण षडहेन सहितं द्वितीयं षडहं प्रशंसति—

द्वितीयं षळहमुपयन्ति द्वादशाहानि भवन्ति द्वादश वै मासा मासश एव तत्संवत्सरमाप्नुवन्ति मासशः संवत्सरे प्रतितिष्ठन्तो यन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

उक्ताभ्यां षडहाभ्यां सहितं तृतीयं षडहं प्रशंसति—

तृतीयं षळहमुपयन्त्यष्टादशाहानि भवन्ति तानि द्वेधा नवान्यानि नवान्यानि नव वै प्राणा नव स्वर्गा लोकाः प्राणांश्चैव तत्स्वर्गांश्च लोकानाप्नुवन्ति प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति, इति ।

त्रिषु षडहेषु यान्यष्टादशाहानि तेषां द्वेधा विभागे सति प्रत्येकं नवसंख्य संपद्यते । प्राणाः सप्तसूर्ध्वाच्छिद्रेषु द्वयोरधश्छिद्रयोर्नवसंख्याकाः स्वर्गलोकाश्च नवभोगस्थानभेदेन नवविधाः । अतः संख्यासाम्यात्प्राणान्स्वर्गलोकांश्च प्राप्य तत्र प्रतिष्ठिता वर्तन्ते ।

पूर्वैस्त्रिभिः षडहैश्चतुर्थं षडहं प्रशंसति—

चतुर्थं षळहमुपयन्ति चतुर्विंशतिरहानि भवन्ति चतुर्विंशतिर्वा अर्धमासा अर्धमासश एव तत्संवत्सरमाप्नुवन्त्यर्धमासशः संवत्सरे प्रतितिष्ठन्तो यन्ति, इति ।

अतः संख्यासाम्यादर्धमासद्वारा संवत्सरे प्रतिष्ठिताः ।

पूर्वैश्चतुर्भिः षडहैः सहितं पञ्चमं षडहं प्रशंसति—

पञ्चमं षळहमुपयन्ति त्रिंशदहानि भवन्ति त्रिंशदक्षरा वै विराड्विराळन्नाद्यं विराजमेव तन्मासि मास्यभिसंपादयन्तो यन्ति, इति ।

अहःसंख्याया विराट्साम्याद्विराजश्चान्नाद्यहेतुत्वात्प्रतिमासं विराड्द्वाराऽन्नाद्यं प्राप्नुवन्ति ।

पुनरपि षडहपञ्चकं प्रशंसति—

अन्नाद्यकामाः खलु वै सत्रमासत तद्यद्विराजं मासि मास्यभिसंपादयन्तो यन्त्यन्नाद्यमेव तन्मासि मास्यवरुन्धाना यन्त्यस्मै च लोकायामुष्मै चोभाभ्याम् ॥ १६ ॥ इति ।

ये सत्रस्यानुष्ठातारस्ते ह्यन्नाद्यकामा अनुतिष्ठन्ति । तथा सति पूर्वोक्तरीत्या संख्यासाम्यात्पञ्चसु षडहेषु त्रिंशदक्षररूपां विराजं प्रतिमासं संपादयन्तो वर्तन्ते । प्रतिमासमन्नाद्यं प्राप्नुवन्तो लोकद्वयार्थं गच्छन्ति । प्रतिमासं षडहपञ्चकमनुतिष्ठेयुरिति तात्पर्यार्थः । तत्र चत्वारोऽभिप्लवाः षडहाः । पञ्चमस्तु पृष्ठ्यः षडह इति सूत्रकारैरभिधानादयं विशेषः शाखान्तरे द्रष्टव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरयब्राह्मणभाष्येऽष्टादशाध्याये द्वितीयः खण्डः ॥ २ ॥ (१६) [१३७] ।

संवत्सरसत्रस्यावयवान्मासानभिधाय सत्रं विधत्ते—

गवामयनेन यन्ति गावो वा आदित्या आदित्यानामेव तदयनेन यन्ति, इति ।

संवत्सरसत्राणां प्रकृतिभूतस्यैतस्य सत्रस्य गवामयनमिति नामधेयम् । तेन यन्त्यनुतिष्ठेयुः । गमनसाम्याद्गवामादित्यत्वम् । तथा सत्यादित्यानामेवायनेनानुष्ठानं कृतं भवति ।

तदेतद्गवामयनं प्रशंसति—

गावो वै सत्रमासत शफाञ्शृङ्गाणि सिषासत्यस्तासां दशमे मासि शफाः शृङ्गाण्यजायन्त ता अब्रुवन्यस्मै कामायादीक्षामह्यापाम तमुत्तिष्ठामेति ता या उदतिष्ठंस्ता एताः शृङ्गिण्यः, इति ।

पुरा कदाचिद्गवाभिमानिन्यो देवताः स्वकीयानां गोदेहानां पादगताञ्शफाञ्शिरोगतानि शृङ्गाणि च सिषासत्यः प्राप्तुमिच्छन्त्यः सत्रमन्वतिष्ठन् । तासां दशमे मासि तदुभयं संपन्नम् । ततस्ता गावः परस्परमिदमब्रुवन् । यस्मै कामाय वयमदीक्षामहि सत्रदीक्षामाप्तवत्यस्तं काममापाम वयं प्राप्तवत्यः । ततोऽस्मात्सत्रादुत्तिष्ठामेति विचार्योत्थाय गताः । ताः प्रसिद्धा गाव उदतिष्ठन् । ता इमाः शृङ्गिण्यो दृश्यन्ते । अनेन दशसु मासेष्वनुष्ठेयं गवामयनं प्रशस्तम् ।

द्वादशसु मासेष्वनुष्ठेयं यद्गवामयनमस्ति तदिदानीं प्रशंसति—

अथ याः समापयिष्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्तन्त ता एतास्तूपरा ऊर्जं त्वसुन्वंस्तस्मादु ताः सर्वानृतून्प्राप्त्वोत्तरमुत्तिष्ठन्त्यूर्जं ह्यसुन्वन्सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः, इति ।

सत्रमनुतिष्ठन्तीनां गवां मध्ये शफशृङ्गार्थिनीनां दशभिर्मासैः सिद्धिर्जाता। यासां तु गवां शृङ्गापेक्षा नास्ति किंतूर्गपेक्षैव तादृश्यो या गाव ऊर्ज(र्क्)सिद्ध्यर्थं द्वादशमासात्मकं संवत्सरं समापयिष्याम इत्यर्थभिप्रेत्य तथैवान्वतिष्ठन्। तासां गवां शृङ्गेष्वश्रद्धया शृङ्गाणि न प्रावर्तन्त नोत्पन्नानीत्यर्थः। ता एता गावो लोके तूपराः शृङ्गरहिता दृश्यन्ते। तासु(स्तु) शृङ्गरहिता अपि सत्रानुष्ठाने-नोर्जं बलाधिक्यमसुन्वन्संपादितवत्यः। तस्माद्बलाधिक(क्य)लक्षणस्य फ-लस्य सद्भावादेव ता गावः सर्वानृतूनषट्संख्याकानपि तस्मिन्सत्रानुष्ठाने प्राप्यो-त्तरमूर्ध्वकाले सत्रादुत्तिष्ठन्ति। यस्मादूर्ज(र्जं)बलातिशयमसुन्वन्प्राप्तवत्यस्तस्मा-द्द्वादशमासानुष्ठानं युक्तम्। ताः शृङ्गरहिता गावः प्रहारभयाभावात्सर्वस्य जगतः प्रेमाणं प्रियत्वं गताः। तथा बलाधिक्येन शरीरपुष्ट्या च सर्वस्य भारवहनादिकार्यस्य नेत्रदर्शनस्य चात्यन्तचारुतां रमणीयतां गताः।

वेदनं प्रशंसति—

सर्वस्य प्रेमाणं सर्वस्य चारुतां
गच्छति य एवं वेद, इति।

अथाऽऽदित्यानामयनमङ्गिरसामयनं च गवामयनविकृतिरूपमुभयं वक्तुं प्रस्तौति—

आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लो-
केऽस्पर्धन्त वयं पूर्व एष्यामो वयमिति
ते हाऽऽदित्याः पूर्वे स्वर्गं लोकं जग्मुः
पश्चेवाङ्गिरसः षष्ट्यां वा वर्षेषु, इति।

आदित्याख्याश्च ये देवा ये चाङ्गिरस(रो)नामका ऋषयस्तदु(उ)भये स्वर्गे लोके परस्परं स्वर्गमाप्तावस्पर्धन्तास्माकमेव प्रथमं गमनमिति। आदित्या अङ्गिरसोऽपि तथैव। तत्राऽऽदित्याः सहसा प्रथमं स्वर्गं प्रापुः। अङ्गिरसस्तु पश्चेव विलम्बेनैव षष्टिसंख्याकेषु वर्षेष्वतीतेषु स्वर्गं प्राप्ताः। वाशब्देन पक्षा-न्तरं द्योत्यते। अङ्गिरसां मध्ये तत्तच्छक्त्यनुसारेण केचित्षष्टेः पूर्वं वा गता इत्यर्थः।

अथाऽऽदित्यायनेऽहःक्लृप्तिं विधत्ते—

यथा वा प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः
सर्वेऽभिप्लवाः षळहा आक्षयन्त्यन्यान्य-
हानि तदादित्यानामयनम्, इति।

---

१ ख. पूर्वमेव ग°।

अत्र वाशब्दो न विकल्पार्थः। किंतु गवामयनप्रकारव्यावृत्त्यर्थः। गवामयने प्रायणीयाख्यं प्रथममहोऽ(हर)तिरात्रसंस्थं चतुर्विंशमुक्थ्यमहर्द्वितीयं तत्र यथा तथैवाऽऽदित्यानामयनेऽपि तत ऊर्ध्वं विशेषोऽस्ति। सर्वेऽभिप्लवाः षडहाः। पूर्वोक्ताभ्यां प्रथमद्वितीयाभ्यामहोभ्यामन्यानि सर्वाण्यहान्याक्ष्यन्ति व्याप्तिं करिष्यन्ति। गवामयने त्वेकैकस्मिन्मासि चत्वार एवाभिप्लवषडहाः। अत इदं वैषम्यं तदिदमादित्यानामयनम्।

अथाङ्गिरसामयनस्य क्लृप्तिं दर्शयति—

**प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः सर्वे पृष्ठ्याः षळहा आक्ष्यन्त्यन्यान्यहानि तदङ्गिरसामयनम्,** इति।

प्रथमद्वितीयैर्व्यतिरिक्तानि[1] सर्वाण्यहानि पृष्ठ्यषडहैर्व्याप्तानीत्येतावानत्र विशेषः। अथवाऽऽक्ष्यन्तिशब्दोऽहर्विशेषनामधेयम्। तथा च बौधायन आह— 'अभिजिद्द्विपुवान्विश्वजिद्दशममहर्महाव्रतमुदयनीयोऽतिरात्र इत्येतान्याक्ष्यन्ति भवन्ति' इति। तदेतद्बौधायनस्य मतम्। अन्यदपि यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालिकिराचार्यो मेने। यानि चान्यानि पृष्ठ्याभिप्लवेभ्यो दशमाच्चेत्यौपमन्यव इति। तथा सति प्रायणीयारम्भणीयाभ्यामभिप्लवषडहेभ्यश्चान्यानि यान्यहानि सन्ति तान्याक्ष्यन्ति। एतन्नामकानीत्युभयत्र व्याख्येयम्। सर्वथाऽप्यस्त्येनयोरुभयोरपि गवामयनाद्विशेषः। गवामयने त्वेकस्मिन्मासि चत्वारोऽभिप्लवाः षडहाः पञ्चमः पृष्ठ्यः षडहः। तथा चाऽऽश्वलायन आह—'अथ गवामयनं सर्वकामाः प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान्पृष्ठ्यपञ्चमान्पञ्च मासानुपयन्ति' इति। आदित्यानामयने पृष्ठ्यः षडहो नास्ति, अङ्गिरसामयनेऽभिप्लवः षडहो नास्तीति वैषम्यम्।

अयनद्वयगतमभिप्लवषडहं पृष्ठ्यषडहं च दर्शयति—

**स यथा स्रुतिरञ्जसायन्येवमभिप्लवः षळहः स्वर्गस्य लोकस्याथ यथा महापथः पर्याण एवं पृष्ठ्यः षळहः स्वर्गस्य लोकस्य तद्यदुभाभ्यां यन्त्युभाभ्यां वै यन्न रिष्यत्युभयोः कामयोरुपाप्त्यै यश्चाभिप्लवे षळहे यश्च पृष्ठ्ये ॥ १७ ॥** इति।

---

१ क. झ. ट. °समति°। २ क. झ. ट. °तिक्रान्तानि।

यथा लोकस्य प्रसिद्धा सृर्ता राजमार्गरूपाऽञ्जसायनी दुःखहेतूनां कण्टक-पाषाणादीनामभावादञ्जसा सम्यगयनस्य गमनस्य साधनभूतैवमभिप्लवः षडहः स्वर्गस्य लोकस्याञ्जसा प्राप्तिहेतुः । अथ पृष्ठ्यषडहस्य दृष्टान्त उच्यते । यथा लोके महापथः प्रौढमार्गो नगरद्वयमध्यवर्ती पर्याणः परितोऽयनस्य गमनस्य साधनभूतो नगरसमीपेऽरण्यपर्वताद्यभावाद्यस्यां दिशि गन्तुमपेक्षा तत्र गन्तुं शक्यत एवमयं पृष्ठ्यः षडहः स्वर्गस्य लोकस्य प्राप्तिहेतुः । तथा सत्यनयोरुभयोरुभाभ्यां षडहाभ्यां यन्तीति यदस्ति तेनोभाभ्यां पादद्वयस्थानीयाभ्यां यत्र गच्छन्पुरुषो न रिष्यति न विनश्यति । योऽभिप्लवे कामोऽस्ति यश्च पृष्ठ्यषडहे तयोरुभयोः कामयोः प्राप्त्यै षडहद्वयं संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टादशाध्याये तृतीयः खण्डः ॥ ३ ॥ (१७) [१३८] ।

---

इत्थं गवामयनमादित्यानामयनमङ्गिरसामयनं चैते संवत्सरसत्रविशेषा उक्ताः । तत्र सर्वत्र पूर्वोत्तरयोर्मासषट्कयोर्मध्यवर्ति यत्प्रधानमहरस्ति तदेतद्विधत्ते—

**एकविंशमेतदहरुपयन्ति विषुवन्तं मध्ये संवत्सरस्य, इति ।**

छन्दोगब्राह्मणे सप्तभ्यो हिं करोतीत्यादिना विहितो योऽयमेकविंशः स्तोमस्तेनैव स्तोमेनास्य सर्वस्तोत्रप्रवृत्तेरिदमहरेकविंशमित्युच्यते । तत्र विषुवन्नामकं संवत्सरसत्रस्य ये पूर्वे षण्मासा ये चोत्तरे तयोर्मासषट्कयोरुभयतो वर्तमानयोर्मध्ये तदेतदहरनुष्ठेयम् । एतच्च नोभयोर्मासषट्कयोरन्तर्भवति । किंत्वतिरिक्तमेकम् । तथा चाऽऽश्वलायन आह—अथ विषुवानेकविंशो न पूर्वस्य पक्षसो नोत्तरस्येति ।

तदेतदहः प्रशंसति—

**एतेन वै देवा एकविंशेनाऽऽदित्यं**
**स्वर्गाय लोकायोदयच्छन्, इति ।**

पुरा देवा एतेनाह्ना स्वर्गलोकाख्यमादित्यमुदयच्छन्नित ऊर्ध्वं प्रापितवन्तः । तथा च शाखान्तरे पठ्यते—'एकविꣳश एष भवति । एतेन वै देवा एकविꣳशेनाऽऽदित्यमित उत्तमꣳ सुवर्गं लोकमारोहयन्' इति ।

आदित्यस्य तेनाह्ना साम्यं दर्शयति—

**स एष इत एकविंशः, इति ।**

योऽयमादित्योऽस्ति स एष इतो भूलोकादारभ्य गण्यमान एकविंशतिसंख्यापूरको भवति । तथा चान्यत्राऽऽम्नायते—'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इति । अथवाऽत्रैव विषुवतः पुरस्तात्पश्चाच्च वक्ष्यमाणमहर्दशकद्वयमपेक्ष्य विषुव एकविंश इत्युच्यते । अस्मिन्पक्ष इदं वाक्यमुत्तरशेषत्वेन योजनीयम् ।

इदानीमुभयतो दशकद्वयं विधत्ते—

तस्य दशावस्तादहानि दिवाकीर्त्यस्य भवन्ति दश परस्तान्मध्य एष एकविंश उभयतो विराजि प्रतिष्ठित उभयतो हि वा एष विराजि प्रतिष्ठितस्तस्मादेषोऽन्तरेमाँल्लोकान्यन्न व्यथते, इति ।

दिवैव कीर्तनीयं मन्त्रजातं यस्मिन्विषुवत्यहनि तदहर्दिवाकीर्त्यम् । तस्याह्नोऽवस्तादधोभागे दशाहानि भवन्ति । परस्तादूर्ध्वभागेऽपि दशाहानि भवन्ति । तयोर्दशकयोर्मध्य एष एकविंशो विषुवान्वर्तते । तस्य विषुवतोऽधस्तात्पूर्वपक्षे षष्ठे मासे स्वरसामानोऽहर्विशेषास्त्रयस्तेभ्यः पूर्वमभिजिदाख्यमेकाहस्ततः पूर्वं पृष्ठ्यः षडह इति दशाहानि । विषुवदूर्ध्वं तु प्रत्यवरोहक्रमेण त्रयः स्वरसामानस्ततो विश्वजिदाख्यमेकाहस्तत ऊर्ध्वं पृष्ठ्यः षडह इति दशाहानि । एवमुभयोः पार्श्वयोरह्नां दशसंख्योपेतत्वाद्विराडेतस्यामुभयतोऽवस्थितायां विराज्ययमेकविंशः प्रतिष्ठितः । यथोक्तगणनया विराजि प्रतिष्ठामेव हिशब्दोऽप्ये( पे )तेन वाक्येन स्पष्टी करोति । तस्मादुभयतो विराड्द्वयेन रक्षितत्वादेष आदित्यो विषुवदहःस्थानीयः । इमाँल्लोकानन्तरा, एषां लोकानां सर्वेषां मध्ये यन्गच्छन्नपि न व्यथते व्यथां न प्राप्नोति । विषुवानप्येकविंश आदित्योऽप्येकविंशस्तस्मादुभयोरेकत्वे सति विषुवतो यद्विराड्द्वयोपेतत्वं तदेवाऽऽदित्यस्योभयतो विराट्त्वं भवति । आदित्यस्य व्यथाराहित्ये येन(त्येन?) विषुवतो वैकल्यराहित्यं सिध्यति । अथवा विषुवतो यथा विराड्द्वयमुभयतो रक्षकमेवमादित्यस्याप्यधस्तादुपरिष्टाच्च वर्तमानं लोकद्वयम् । एतदेवाभिप्रेत्य शाखान्तरे श्रूयते—' तस्मादन्तरेमौ लोकौ यन्सर्वेषु सुवर्गेषु लोकेषु अभितपन्नेति ' इति ।

अथ विषुवत उभयतः समीपवर्तिनः स्वरसामाख्यानहर्विशेषान्प्रशंसति—

तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपाता-

दबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नुव-
न्स्तोमा वै त्रयः स्वर्गा लोकास्तस्य पराचोऽति-
पातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात्प्रत्य-
स्तभ्नुवन्स्तोमा वै त्रयः स्वर्गा लोकास्तत्त्रयोऽव-
स्तात्सप्तदशा भवन्ति त्रयः परस्तान्मध्य एष एक-
विंश उभयतः स्वरसामभिर्धृत उभयतो हि वा
एष स्वरसामभिर्धृतस्तस्मादेषोऽन्तरेमाँल्लोकान्यन्न
व्यथते, इति ।

योऽयमादित्योऽस्ति तस्याऽऽदित्यस्य स्वर्गलोकादवपात आधाराभावादधः-पतनं तस्माद्देवा अबिभयुरादित्योऽधः पतिष्यतीति भीताः सन्तस्तमादित्यमव-स्तान्मण्डलस्याधोभागे त्रिभिः स्वर्गैर्लोकैः स्वर्गशब्दोपलक्षितैर्भूरादिभिः प्रत्युत्त-भ्नुवन्नधःपातप्रतिबन्धार्थमुत्तम्भनमाधाररूपमकुर्वन् । यथा गृहगतवंशादीनाम-धःपातनिवारणाय स्तम्भेनोत्तम्भनं कुर्वन्ति तद्वदिति । वर्तमानस्याऽऽदित्यस्य यथा त्रयो लोका उत्तम्भकास्तथैवाऽऽदित्यस्थानीयस्य विषुवतोऽह्नः स्वर्ग-लोकसदृशास्त्रयः स्तोमा एवोत्तम्भकाः । सप्तदशस्तोमयुक्ताः स्वरसामानोऽ-हर्विशेषाः स्तोमशब्देनात्र विवक्षिताः । पुनरपि देवास्तस्याऽऽदित्यस्य परा-चोऽतिपातान्मण्डलात्पराग्भूतेषूर्ध्ववर्तिषु लोकेषु योऽयमतिपातो दृष्टिगोचरं देशमुल्लङ्घ्य यत्र क्वापि दूरदेशगमनं तस्मादतिपाताद्भीताः सन्तः परस्तादा-दित्यमण्डलस्योपरि त्रिभिर्जनतपःसत्यशब्दाभिधेयैस्त्रिभिः स्वर्गैर्लोकैस्तमा-दित्यं प्रत्यस्तभ्नुवन् । यथा पूर्वत्राधःपतननिवृत्त्यर्थमुत्तम्भनं कृतमेवमु-परिष्टादतिपातनिवृत्त्यर्थं प्रतिस्तम्भनं प्रतिबन्धकस्तम्भमकुर्वन् । आदित्य-स्थानीयस्य तु विषुवतोऽह्न उत्तरपक्षगताः स्तोमशब्दोपलक्षिताः स्वरसामा-ख्यास्त्रयोऽहर्विशेषा एव प्रतिस्तम्भकाः । तत्तथा सति ये विषुवतोऽह्नोऽवस्ता-दधोवर्तिनस्त्रयोऽहर्विशेषास्ते सप्तदशस्तोमयुक्ताः कार्याः । एवं च सति मध्येऽ-वस्थित एकविंशाख्योऽहर्विशेष उभयतोऽधस्तादुपरिष्टाच्च स्वरसामनामकै-स्त्रिभिस्त्रिभिरहोभिर्धृतः । अयमेवार्थः शाखान्तरप्रसिद्धद्योतकेन हिशब्द-युक्तेन वाक्येन पुनर्दृढीकृतः । यस्माद्विषुवदहःस्थानीय आदित्यः स्वरसामस्था-नीयैरुभयतोऽवस्थितैस्त्रिभिस्त्रिभिर्लोकैर्धृतस्तस्मात्कारणादप्यादित्यो ऽन्तरा-

१ ख. °न्धस्त°

मध्येऽवस्थित इमाँल्लोकान्सर्वान्सवेदा यन्गच्छन्नपि न व्यथते व्यथां न प्राप्नोति । अत्रार्थवादेन पूर्वेषूत्तरेषु च त्रिष्वहःसु सप्तदशस्तोमविधिरुन्नेयः । तथा च शाखान्तरे श्रूयते—' उक्थ्या एव सप्तदशाः परःसामानः कार्याः ' इति । स्वरसामाख्यानामह्नामेव परःसामेति नामान्तरम् ।

अथ विहितानेतान्पूर्वोत्तरान्सप्तदश स्तोमान्प्रकारान्तरेण पुनः प्रशंसति—

तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं परमैः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नुवन्स्तोमा वै परमाः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तं परमैः स्वर्गैर्लोकैः परस्तात्प्रत्यस्तभ्नुवन्स्तोमा वै परमाः स्वर्गा लोकास्तत्त्रयोऽवस्तात्सप्तदशा भवन्ति त्रयः परस्तात्ते द्वौ द्वौ संपद्य त्रयश्चतुस्त्रिंशा भवन्ति चतुस्त्रिंशो वै स्तोमानामुत्तमस्तेषु वा एष एतदध्याहितस्तपति तेषु हि वा एष एतदध्याहितस्तपति, इति ।

तेषु हि लोकेषु वर्तमानो य आदित्यस्तस्य स्वर्गलोकादवपातः स्यादिति देवा भीताः सन्तः स्तोमनामादित्यस्तम्भनस्वरूपं परमत्वं तेनोभयतो वर्तमानाः षट्संख्याकाः सप्तदशस्तोमका द्वौ द्वावेकीभूय त्रिसंख्याकाश्चतुस्त्रिंशस्तोमा भवन्ति । त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिण(न)वत्रयस्त्रिंशाख्याश्छन्दोगैराम्नाता ये स्तोमाः सन्ति तेषामयं चतुस्त्रिंशस्तोम उत्तमः पूर्वापेक्षया संख्याधिक्यात् । तेषु स्तोमस्थानीयेषूभयतः स्थितेषु स्वर्गेष्वेषोऽध्याहित आदित्यो जगत्स्रष्टा स्थापितः सन्नेतस्मात्प्रत्यक्षं यथा भवति तथा तपति संतापं करोति तेषु हीति वाक्येन तदेव दृढी क्रियते ।

विषुवत एवं प्रशंसामभिप्रेत्य तद्रूपत्वेनोपचरितमादित्यं पुनः प्रशंसति—

स वा एष उत्तरोऽस्मात्सर्वस्माद्भूताद्भविष्यतः सर्वमेवेदमतिरोचते यदिदं किंचोत्तरो भवति, इति ।

योऽयमादित्योऽभिहितः स एवैष भूताद्भविष्यतश्च सर्वस्मादस्माज्जगत

---

१ ख. उक्था । २ क. घ. °मानां प° ।

उत्तर उत्कृष्टो यदिदं किंच जगदस्तीदं सर्वमेवातिक्रम्य रोचते दीप्यते तद्वदयं विषुवानप्यन्येभ्यः सर्वेभ्योऽहोभ्य उत्तर उत्कृष्टो भवति ।

वेदनं प्रशंसति—

यस्मादुत्तरो बुभूषति तस्मादुत्तरो भवति य एवं वेद ॥ १८ ॥ इति ।

एतद्वेदनादुत्कृष्टो भूत्वा प्रतिष्ठयाऽधिकं शोभते तस्मादुत्कृष्टतरो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टादशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (१८) [१३९] ।

---

स्वरसामाख्येष्वहःसु सप्तदश स्तोमाः पूर्वं विहिता इदानीं तान्यहानि विधत्ते—

स्वरसाम्न उपयन्तीमे वै लोकाः स्वरसामान इमान्वै लोकान्स्वरसामभिरस्पृण्वंस्तत्स्वरसाम्नां स्वरसामत्वं तद्यत्स्वरसाम्न उपयन्त्येष्वेवैनं तल्लोकेष्वाभजन्ति, इति ।

स्वरसामाख्यान्षट्संख्याकानहर्विशेषाननुतिष्ठेयुः । आदित्यस्याधस्तादुपरिष्टाच्च वर्तमाना इम एव लोकाः स्वरसामरूपास्तस्मादनुष्ठितैरेतैः स्वरसामभिरिमाँल्लोकानस्पृण्वन्प्रीतानकुर्वंस्तस्मादेतेषामह्नां स्वरोपेतसामवत्प्रीतिहेतुत्वात्स्वरसामेति नाम संपन्नम् । एतेषामनुष्ठातारो लोकेषु सर्वेष्वाभजन्ति भोगभाजो भवन्ति ।

अथ स्वरसामभ्यः सर्वेभ्योऽधस्तादुपरिष्टाच्च द्वे अहनी विधत्ते—

तेषां वै देवाः सप्तदशानां प्रवॢलयादबिभयुः समा इव वै स्तोमा अविगूह्ळा इवेमे ह न प्रवॢलियेरन्निति तान्सर्वैः स्तोमैरवस्तात्पर्यार्षन्सर्वैः पृष्ठैः परस्तात्तद्यदभिजित्सर्वस्तोमोऽवस्ताद्भवति विश्वजित्सर्वपृष्ठः परस्तात्तत्सप्तदशानुभयतः पर्यृषन्ति धृत्या अप्रवॢलयाय, इति ।

ये स्वरसामानः सप्तदशस्तोमयुक्तास्तेषां प्रवूलयात्प्रकर्षेण विशरणाद्देवा अबिभयुः । वूली विशरण इति धातोरिदं रूपम् । विशरणशङ्का कथमिति तदुच्यते । षट्स्वहःसु प्रयोक्तव्या एते सप्तदश स्तोमाः सभा इव वै सदृशा एव तस्मादविगूह्ळा इव गूहनस्य गोपनस्याभावाच्छिथिला एवैकबन्धत्वे सति नूतनत्वचमत्काराभावादनादरेण विशीर्णा भवन्ति । तस्मादिमे स्तोमा न प्रवूलियेरन्प्रकर्षेण विशीर्णा मा भूवन्निति विचार्य तान्सप्तदश स्तोमानवस्ता-दधोभागे सर्वैः स्तोमैस्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिण(न)वत्रयस्त्रिंशाख्यैः पर्या-र्षन्परितो गता रक्षणाय परितो वेष्टनं कृतवन्त इत्यर्थः । तथा परस्तात्सप्तद-शस्तोमानामुपरिभागे सर्वैः पृष्ठै रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामाख्यैः पृष्ठ-स्तोत्रैः पर्यार्षन् । तस्मात्स्वरसाम्नामधस्तात्पूर्वस्मिन्दिवसे सर्वस्तोमयुक्तमभि-जिदाख्यमहरनुष्ठेयम् । तथा तेषामुपरिष्टात्सर्वपृष्ठस्तोत्रयुक्तं विश्वजिदाख्यमह-रनुष्ठेयम् । यदेतद्द्विविधमनुष्ठानं तेन सप्तदशस्तोमानुभयतः पर्यृषन्ति परिरक्ष-न्ति तच्च रक्षणं धृत्यै दार्ढ्यायाप्रवूलयाय शैथिल्याभावाय संपद्यते ।

अथ विषुवत्यहनि पञ्च सामानि विधत्ते—

> तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपाता-
> दबिभयुस्तं पञ्चभी रश्मिभिरुदवयन्रश्मयो वै
> दिवाकीर्त्यानि महादिवाकीर्त्यं पृष्ठं भवति विकर्णं
> ब्रह्मसाम भासमग्निष्टोमसामोभे बृहद्रथंतरे पवमा-
> नयोर्भवतस्तदादित्यं पञ्चभी रश्मिभिरुद्वयन्ति
> धृत्या अनवपाताय, इति ।

देवाः पुनरपि तस्याऽऽदित्यस्य स्वर्गलोकादधःपातमाशङ्क्य तस्माद्भीताः । यद्यपि पृथिव्यादिलोकत्रयमुत्तम्भकमुक्तं तथाऽप्युपरि रज्जुभिरिव दृढबन्धन-स्याभावादिति ततश्चलने सति पार्श्वयोः पतनमाशङ्क्यते तन्मा भूदिति देवा-स्तमादित्यं पञ्चभी रश्मिभिः प्रग्रहैरुदवयन्नूर्ध्वमुत्कृष्य वयनं कृतवन्तो दृढं बद्धवन्त इत्यर्थः । ये बन्धनहेतवो रश्मयस्तत्स्थानीयान्यस्मिन्विषुवति दिवा-कीर्त्यानि दिवैव पठनीयानि पञ्च सामानि तेषु मध्ये महादिवाकीर्त्यनामकमेकं साम । तच्च विभ्राड्बृहत्पिबतु सोम्यं मधु [ १०-१७०-१ ] इत्यस्यामृच्यु-त्पन्नम् । तत्सामयुक्तं पृष्ठस्तोत्रं कर्तव्यम् । तथा विकर्णाख्यमेकं साम । तच्च पृक्षस्य वृष्णो अरुषस्य नू सहः [ ६-८-१ ] इत्यस्यामृच्युत्पन्नम् । तदेत-द्ब्रह्मसाम कर्तव्यम् । ब्राह्मणाच्छंसिनमभिलक्ष्य गीयमानं ब्रह्मसाम । तथा

भासाख्यमपरं साम । तदपि पृक्षस्येत्यास्यामेवोत्पन्नम् । तच्चाग्निष्टोमसाम कर्तव्यम् । येन साम्नाऽग्निष्टोमसंस्था समाप्यते तदग्निष्टोमसाम । बृहद्रथंतरे प्रसिद्धे भवतः । माध्यंदिनपवमानार्भवपवमानयोः कर्तव्यत्वात् । पञ्चसामप्रयोगेणाऽऽदित्यं पञ्चभिः सामरज्जुभिरूर्ध्वं बध्नन्ति । तच्चाऽऽदित्यस्य धारणाय भवति । तेन धारणेनाधःपातो न भवति ।

अथ प्रातरनुवाकस्य चोदकप्राप्तकालं बाधितुं कालान्तरं विधत्ते—

उदित आदित्ये प्रातरनुवाकमनुब्रूयात्सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति, इति ।

प्रकृतावादित्योदयात्प्रागेव प्रातरनुवाकः पठ्यते । अत्र तु सर्वस्याह्नो दिवाकीर्त्यत्वसिद्ध्यर्थमुदयादूर्ध्वमनुब्रूयात् ।

सवनीयपशौ कंचिद्विशेषं विधत्ते—

सौर्यं पशुमन्यङ्गश्वेतं सवनीयस्योपालम्भ्यमालभेरन्सूर्यदेवत्यं ह्येतदहः, इति ।

सूर्यो देवता यस्य पशोः सोऽयं सौर्योऽन्यङ्गं वर्णान्तरेण संपादितं चिह्नमन्यङ्गं तादृशश्चासौ श्वेतश्च सोऽयमन्यङ्गश्वेतो वर्णान्तरेण मिश्रितः सर्वश्वेत इत्यर्थः । तादृशः पशुरत्र सवनीयस्थान उपालम्भ्योऽतस्तमालभेरन् । यस्मादेतदहः सूर्यदेवत्यं तस्माद्युक्तः सूर्यदेवत्यः पशुः ।

सामिधेनीषु विशेषं विधत्ते—

एकविंशतिं सामिधेनीरनुब्रूयात्प्रत्यक्षाद्ध्येतदहरेकविंशम्, इति ।

एतद्विषुवन्नामकमहरेकविंशस्तोमयुक्तत्वात्प्रत्यक्षाद्धि साक्षादेव मुख्यमेवैकविंशं तस्मात्सामिधेनीनामेकविंशतिसंख्या युक्ता । अत्र चोदकप्राप्ताः पञ्चदश धाय्याः षट्संख्याका इत्येकविंशतिः । तथा चाऽऽश्वलायन आह—‘ विषुवान्दिवाकीर्त्य उदिते प्रातरनुवाकः पृथुपाजा अमर्त्य इति षड्धाय्याः सामिधेनीनां सौर्यः सवनीयस्योपालम्भ्यः ’ इति ।

निष्केवल्यशस्त्रे निविद्धानं विधत्ते—

एकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये

---

१ ख. °शतिः सं° ।

निविदं दधाति तावतीरुत्तराः शंसति शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति ॥ १९ ॥ इति ।

तस्मिञ्शस्त्रे स्तोत्रियानुरूपयोस्तृचयोः षडृचो यद्वावानेत्येका धाय्या बृहद्रथंतरयोर्योनी द्वे उत्तमसाम प्रगाथस्य प्रग्रथनेन तिस्रो नृणामुत्वानृतमामिति तिस्रो यस्तिग्मशृङ्ग इत्येकादशर्चोऽभित्यमिति पञ्चदशर्चं इत्येवमेकचत्वारिंशत् । तत्र प्रथमया त्रिरभ्यस्तया सह त्रिचत्वारिंशत् । इन्द्रस्य नु वीर्याणीत्यस्मिन्पञ्चदशर्चे सूक्तेऽष्टौ नव वा शंसनीयाः । तत्राष्टत्वपक्ष एकपञ्चाशद्भवन्ति । नवपक्षे द्विपञ्चाशत् । तच्छंसनादूर्ध्वमिन्द्रस्य नु वीर्याणीत्यस्य सूक्तस्य मध्य ऐन्द्रीं निविदं दध्यात् । तत ऊर्ध्वं पुनरपि तावतीर्ऋचः शंसेत् । तथा सति शतसंख्यासंपत्त्या पुरुषायुःसाम्यं भवति । इन्द्रियाणि च शतसंख्यासु नाडीषु संचाराच्छतं भवन्ति । तदीयव्यापाराश्च तथा शतसंख्याकाः । एवं सति यजमानं संपूर्ण आयुषि वीर्य इन्द्रियेष्ववस्थापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टादशाध्याये पञ्चमः खण्डः ॥ ५ ॥(१९) [१४०] ।

---

अथ कस्याश्चिदृचः शंसनं विधत्ते—

दूरोहणं रोहति स्वर्गो वै लोको दूरोहणम्, इति ।

दुःशकं रोहणं यस्मिन्नादित्यमण्डले तद्दूरोहणं तत्राऽऽरोहणस्य साधनत्वान्मन्त्रस्वरूपमपि दूरोहणमित्युच्यते । तद्रोहत्यारोहणार्थं शंसेदित्यर्थः । यद्वा मन्त्रस्य दुःशक उच्चारणविशेषो दूरोहणं स च विशेषः सूत्रेऽवगन्तव्यः । तं रोहति विशिष्टमुच्चारणं कुर्यादित्यर्थः । योऽयं स्वर्गलोकस्तस्याऽऽरोहणं दुःशकमिति दूरोहणत्वम् । तादृशं स्वर्गं लोकं प्रापयतीत्यर्थः ।

वेदनं प्रशंसति—

स्वर्गमेवं तल्लोकं रोहति य एवं वेद, इति ।

विहितमर्थं प्रशंसति—

यदेव दूरोहणा३म्, असौ वै दूरोहो योऽसौ तपति कश्चिद्वा अत्र गच्छति स यद्दूरोहणं

रोहत्येतमेव तद्रोहति, इति।

दूरोहणमिति यदुक्तं तत्किमिति शेषः। प्रश्नार्था प्लुतिः। असावित्यत्रोत्तरमुच्यते। योऽसावादित्यस्तपति, असावेव दूरोहो दुःशकारोहणस्थानावस्थितत्वात्। अथवा यः कश्चिद्यजमानः सम्यगनुष्ठायात्राऽऽदित्यलोके गच्छति सोऽपि दूरोहो दुःशकस्थानारोहणत्वात्। एवं सति यदि दूरोहणं मन्त्रं रोहति शंसेत्तत्तेन शंसनेनैतमेवाऽऽदित्यं लोकं रोहति प्राप्नोति।

मन्त्रविशेषं विधत्ते—

हंसवत्या रोहति, इति।

हंसशब्दो यस्यामृच्यस्ति सेयं हंसवती तया रोहेत्तामुच्चारयेदित्यर्थः।

तस्या ऋचः प्रथमपादे पूर्वभागमनूद्य व्याचष्टे—

हंसः शुचिषदित्येष वै हंसः शुचिषत्, इति।

हन्ति सर्वदा गच्छतीति हंसः। शुचौ शुद्धे द्युलोके सीदति तिष्ठतीति शुचिषत्। अस्मिन्भागे यः प्रतिपाद्यते स एव मण्डले दृश्यमान एव। स च सर्वदा गतिमत्त्वाद्धंसो भवति द्युलोकेऽवस्थानाच्छुचिषदपि भवति।

उत्तरभागमनूद्य व्याचष्टे—

वसुरन्तरिक्षसदित्येष वै वसुरन्तरिक्षसत्, इति।

वसति सर्वदेति वसुर्वायुर्न हि वायोरहनि रात्रौ वा कदाचिदस्तमयोऽस्ति तादृशो वायुरन्तरिक्षे सीदतीत्यन्तरिक्षसत्। आदित्यस्य परमात्मरूपत्वेन सर्वात्मकत्वादन्तरिक्षसद्वायुरप्येष एवेत्युच्यते।

द्वितीयपादस्य पूर्वभागमनूद्य व्याचष्टे—

होता वेदिषदित्येष वै होता वेदिषत्, इति।

होता होमस्य कर्ता। यागवेद्यां सीदतीति वेदिषत्। आदित्यस्य तद्रूपत्वं पूर्ववत्।

उत्तरभागमनूद्य व्याचष्टे—

अतिथिर्दुरोणसदित्येष वा अतिथिर्दुरोणसत्, इति।

न विद्यते तिथिविशेषनियमो यात्रार्थे यस्य सोऽयमतिथिः सन्दुरोणेषु तत्तद्गृहेषु सीदति याचितुं प्रचरतीति दुरोणसत्। आदित्यस्य तद्रूपत्वमपि द्रष्टव्यम्।

---

हंसः शुचिषद्वसु०—४–४०–५।

तृतीयपादं चतुर्धा विभज्य प्रथमभागमनूद्य व्याचष्टे—

नृषदित्येष वै नृषत्, इति ।

नृषु मनुष्येषु दृष्टिरूपेण सीदतीति नृषत् । तथा चाऽऽरण्यकाण्डे वक्ष्यति-'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इति । तस्मादेष आदित्य एव नृषच्छब्दवाच्यः ।

द्वितीयभागमनूद्य व्याचष्टे—

वरसदित्येष वै वरसद्वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति, इति ।

वरे श्रेष्ठे मण्डले सीदतीति वरसत् । एतस्याऽऽदित्यस्य मण्डलेऽवस्थानं प्रसिद्धम् । यानि सद्मानि निवासस्थानानि सन्ति तेषां मध्ये यस्मिन्मण्डल एष आदित्य आसन्न उपविष्टः संस्तपत्येतन्मण्डलं वरं श्रेष्ठं सद्म ।

तृतीयभागमनूद्य व्याचष्टे—

ऋतसदित्येष वै सत्यसत्, इति ।

ऋतं सत्यवदनं वेदवाक्यं तत्र सीदति प्रतिपाद्यत इत्यृतसत् । आदित्यस्य सत्येन वेदवाक्येन प्रतिपाद्यत्वमनेकमन्त्रेषु प्रसिद्धम् ।

चतुर्थभागमनूद्य व्याचष्टे—

व्योमसदित्येष वै व्योमसद्व्योम वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति, इति ।

व्योम्न्याकाशमार्गे सीदतीति व्योमसत् । आदित्यस्य तथाविधत्वं प्रसिद्धम् । यस्मिन्व्योमस्थान एष आदित्यः प्रत्यासन्नस्तपति तदेतत्स्थानं सद्मनां निवासस्थानानां मध्ये व्योम गृहाद्यावरणशून्यमाकाशम् ।

चतुर्थं पादं पञ्चधा विभज्य प्रथमभागमनूद्य व्याचष्टे—

अब्जा इत्येष वा अब्जा अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति, इति ।

अद्भ्यो जायते योऽय(यं)मका(क)रादिः सोऽयमब्जा तद्रूपत्वमस्य सर्वात्मकत्वादवगन्तव्यम् । किंचायमादित्योऽस्मदृदृष्ट्या प्रातःकाले पूर्वसमुद्रगताभ्योऽद्भ्य उदेति सायंकाले पश्चिमसमुद्रगता अपः प्रविशतीव लक्ष्यते तस्मादब्जाः ।

---

१ ख. °ते °व्योमाऽऽकाशादिः ।

द्वितीयभागमनूद्य व्याचष्टे—

गोजा इत्येष वै गोजाः, इति।

गोभ्यो जायते जीवादिः स गोजा अस्य तद्रूपत्वं पूर्ववत्।

तृतीयभागमानूद्य व्याचष्टे—

ऋतजा इत्येष वै सत्यजाः, इति।

ऋतं सत्यं वैदिकमन्त्रजातं तस्माज्जायत इत्यृतजाः। वैदिकानुष्ठानेन हि देवलोकादौ जायत इति प्रसिद्धमादित्यस्य तद्रूपत्वं पूर्ववत्।

चतुर्थभागमनूद्यव्याचष्टे—

अद्रिजा इत्येष वा अद्रिजाः, इति।

अद्रावुदयगिरावुत्पद्यत इत्यद्रिजाः। आदित्यस्य तथात्वं पुराणादौ प्रसिद्धम्।

पञ्चभागमनूद्य व्याचष्टे—

ऋतमित्येष वै सत्यम्, इति।

ऋतशब्दः सत्यवाची। सत्यं च द्विविधम्—व्यावहारिकं पारमार्थिकं च। तत्र व्यावहारिकं वाचा सत्यभाषणम्। पारमार्थिकं परं ब्रह्म। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः। तदिदमृतशब्देन विवक्षितम्। अयं चाऽऽदित्यो ब्रह्मरूपं सत्यम्। अत एव शाखान्तरे बृहदिति मन्त्रशेषं पठन्ति। मन्त्रान्तरे चैवं श्रूयते—असावादित्यो ब्रह्मेति।

कृत्स्नस्य मन्त्रस्य तात्पर्यं दर्शयति—

एष एतानि सर्वाण्येषा ह वा अस्य
च्छन्दःसु प्रत्यक्षतमादिव रूपम्, इति।

शुचिषदित्यादिशब्दैर्यानि रूपाण्यभिहितानि तानि सर्वाण्येष एव। अस्य परब्रह्मत्वेन सर्वात्मकत्वात्। छन्दःसु वेदेषु मध्य एषा ह वै येयं हंसवती, ऋक्सैवास्याऽऽदित्यस्य सर्वात्मकं रूपं प्रत्यक्षतमादिवातिशयेन प्रत्यक्षं विस्पष्टं यथा भवति तथा प्रतिपादयतीति शेषः।

मन्त्रतात्पर्यं दर्शयन्नेव विधिं निगमयति—

तस्माद्यत्र क्व च दूरोहणं रोहेद्धंसवत्यैव रोहेत्, इति।

---

१ क. ख. ट. °न्तर ऋतं बृ°। २ क. ख. ट. °न्तरं चै°।

यत्र क्वापि कर्मणि दूरोहणविधानमस्ति तत्र सर्वत्र हंसवत्यैव विज्ञेयम् ।

फलभेदेन सूक्तान्तरं विधत्ते—

ताक्ष्यें स्वर्गकामस्य रोहेत्, इति ।

ताक्ष्याख्येन महर्षिणा दृष्टं ताक्ष्यम् । तस्मिन्सूक्ते स्वर्गकामस्य यजमानस्य दूरोहणं रोहेन्नतु हंसवत्याम् ।

तदेतत्प्रशंसति—

ताक्ष्यों ह वा एतं पूर्वोऽध्वानमैद्यत्राद्वो गायत्री सुपर्णो भूत्वा सोममाहरत्तद्यथा क्षेत्रज्ञमध्वनः पुर एतारं कुर्वीत तादृक्तद्यदेव ताक्ष्येंऽयं वै ताक्ष्यों योऽयं पवत एष स्वर्गस्य लोकस्याभिवोह्ळा, इति ।

अत्रैव वक्ष्यमाणं कार्यं संपन्नं तत्र ताक्ष्यों ह वै गरुड एव पूर्वः प्रथमगामी सन्नेतमध्वानमैत्प्राप्तवान् । किं वक्ष्यमाणमिति तदुच्यते । गायत्री सुपर्णः पक्षी भूत्वा सोममाहरत् । एतच्च पूर्वमेव प्रतिपादितम् । एवं सति ताक्ष्यें सूक्ते यदेव शंसनं तत्तत्र शंसने दृष्टान्तः कथ्यते । यथा लोके क्षेत्रज्ञं मार्गविशेषाभिज्ञं तद्देशवासिनं कंचित्पुरुषमध्वनो मार्गस्य पुर एतारं पुरतो गन्तारं मार्गप्रदर्शकं कुर्वीत तादृक्तत्ताक्ष्यशंसनम् । योऽयं वायुरन्तरिक्षे पवतेऽयमेव ताक्ष्यस्वरूपः । एष च स्वर्गस्य लोकस्याभिवोह्ळा नेता भवति । तस्मात्ताक्ष्यसूक्तेनैव दूरोहणं रोहेत् ।

तस्य सूक्तस्य प्रथमायामृचि प्रथमपादमनूद्य व्याचष्टे—

त्यमू षु वाजिनं देवजूतमित्येष वै वाजी देवजूतः, इति ।

चतुर्थपादे ताक्ष्यमिति वक्ष्यति । कीदृशं ताक्ष्यम् । त्यमू षु(१) । त्यच्छब्दः सर्वनामत्वात्प्रसिद्धवाची । उशब्द एवकारार्थः । पुराणादिषु प्रसिद्धमेव । वाजिनमन्नवन्तं देवजूतं देवानां मध्ये वेगवन्तम् । अस्मिन्पादेऽभिधीयमान एष वै ताक्ष्य एव तस्यान्नवत्त्वाद्देवेषु मध्ये वेगवत्त्वाच्च ।

---

त्यमू षु वाजिनं०—१०-१७८-१ ।

---

१ ख. °स्याम् । वेदनं प्रशं° ।

द्वितीयपादमनूद्य व्याचष्टे—

सहावानं तरुतारं रथानामित्येष वै सहावांस्तरु-
तैष हीमाँल्लोकान्सद्यस्तरति, इति।

पुनरपि कीदृशं तार्क्ष्यम्। सहावानं सहः सहनं सर्वा(र्पा)दीनामभिभव-स्तद्वन्तम्। रथानां तरुतारमुल्लङ्घयितारम्। एष तार्क्ष्य एवास्मिन्पादेऽभिहि-तः। सहावानभिभवक्षमः। तरुतोल्लङ्घयिता भवति। यस्मादेष इमाँल्लोका-न्सद्यस्तदानीमेव तरितुं क्षमः।

तृतीयपादमनूद्य व्याचष्टे—

अरिष्टनेमिं पृतनाजमाशुमित्येष वा अरिष्टनेमिः
पृतनाजिदाशुः, इति।

पुनरपि कीदृशं तार्क्ष्यमरिष्टनेमिं रिष्टं हिंसा तद्राहित्यमरिष्टम्। तस्य च नेमिस्थानीयम्। यथा रथचक्रस्य नेमिः परितो रक्षिका भवति तादृशम्। पृतना परकीयसेना तां जयतीति पृतनाजम्। आशुं वेगवन्तम्। अस्मिन्पा-देऽभिहितानां गुणानां तार्क्ष्ये सद्भावादेष एवात्र प्रतिपाद्यः।

चतुर्थपादे प्रथमभागमनूद्य व्याचष्टे—

स्वस्तय इति स्वस्तितामाशास्ते, इति।

स्वस्तये क्षेमार्थमनेन पादेन क्षेमः प्रार्थितो भवति।

उत्तरभागमनूद्य व्याचष्टे—

तार्क्ष्यमिहाऽऽहुवेमेति ह्वयत्येवैनमेतत्, इति।

तार्क्ष्यं गरुडमिह कर्मणि हुवेमाऽऽह्वयामः। एतेन भागेन तार्क्ष्यमाह्वय-त्येव।

तार्क्ष्यसूक्ते द्वितीयस्या ऋचः पूर्वार्धे प्रथमभागमनूद्य व्याचष्टे—

इन्द्रस्येव रातिमाजोहुवानाः स्वस्तय इति स्वस्ति-
तामेवाऽऽशास्ते, इति।

यथेन्द्रस्य दातव्यं हविः प्रयच्छामस्तथैवास्य तार्क्ष्यस्य रातिं दातव्यं वसु, आजोहुवानाः समन्तात्पुनः पुनर्ददाना वयमारुहेमेति वक्ष्यमाणेन संबन्धः। किमर्थं स्वस्तये क्षेमार्थम्। एतत्पाठेन स्वस्तितामेव क्षेममेवाऽऽशास्ते प्रार्थयते।

---

इन्द्रस्येव रातिमाजोहुवानाः०—१०-१७८-२।

उत्तरभागमनूद्य व्याचष्टे—

**नावमिवाऽऽरुमेहेति समेवैनमेतदधिरोहति स्वर्गस्य लोकस्य समष्ट्यै संपत्त्यै संगत्यै, इति ।**

यथा लोके नद्युत्तरणाय नावमारोहत्येवं स्वर्गं प्राप्तुं दूरोहणमारुहेम । एतद्भागपाठेनैनं दूरोहणं स्वर्गं समेव सम्यगेवाधिरोहति । अतस्तच्छंसनं स्वर्गस्य समष्ट्यै प्राप्त्यै भवति । सा च प्राप्तिः संपत्त्यै भोगाय भोग्यवस्तुसंपादनाय भवति । संपादनं संगत्यै भोगसंबन्धाय भवति ।

उत्तरार्धमनूद्य व्याचष्टे—

**उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषामेतीमे एवैतदनुमन्त्रयत आ च परा च मेष्यनू, इति ।**

नकारः समुच्चयार्थः । उर्वी च भूमिश्च पृथ्वी विस्तीर्णा द्यौश्च बहुले उभे अप्यतिदीर्घे गभीरे अत्यन्तगाम्भीर्येण युक्ते उभयोरियत्ता निश्चेतुमशक्येत्यर्थः । तादृश्यौ हे द्यावापृथिव्यौ वयमेतावागमनवेलायां परेतौ पुनर्गमनवेलायां च वामुभे मा रिषाम हिंसायुक्ते मा करवाम । एतत्पाठेन होताऽऽमेष्यंश्चाऽऽगमिष्यन्नपि परामेष्यंश्च पुनरपि परावृत्य गमिष्यन्नपीमे एव द्यावापृथिव्यावेवानुमन्त्रयते ।

तृतीयस्या ऋचः पूर्वार्धमनूद्य व्याचष्टे—

**सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषाऽपस्ततानेति प्रत्यक्षं सूर्यमभिवदति, इति ।**

यस्तार्क्ष्यः सद्यश्चित्तस्मिन्नेव क्षणे शवसा बलेन पञ्च कृष्टीः पञ्चविधान्पुरुषजातिविशेषान्देवमनुष्यासुरराक्षसगन्धर्वानातिविस्तारितवान् । यथा सूर्यो ज्योतिषा स्वकीयरश्मिसमूहेनापो वृष्ट्युदकं ततान विस्तारयाति तद्वत् । एतत्पाठेन तार्क्ष्यं देवं प्रत्यक्षं सूर्यं मुख्यं कृत्वाऽभिवदति प्रशंसति ।

उत्तरार्धमनूद्य व्याचष्टे—

**सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते**

---

सद्यश्चिद्यः शवसा०—१०-१७८-३ ।

---

१ क. झ. ट. स्वर्गसमं तेन सम्यं ।

युवतिं न शर्यामित्याशिषमेवैतेनाऽऽशास्त
आत्मने च यजमानेभ्यश्च ॥ २० ॥ इति ।

अस्य तार्क्ष्यस्य रंहिर्गतिः सहस्रसाः सहस्रभेदयुक्ता शतसाः शतभेदयुक्ता । वन षण संभक्ताविति धातुः । सहस्रं सनुते संभजतीति सहस्रसास्तां गतिं केऽपि न स्मा वरन्ते न वारयन्ति । यथा लोके शर्यां शरकाष्ठनिर्मितां युवतिं शत्रुशरीरमिश्रणयोग्यां युवतिं तद्वत् । नकार उपमार्थः । यथाऽतिशूरेण धानुष्केण प्रयुक्तो बाणः केनापि न निवार्यते तथा त्वदीयगतिरित्यर्थः । एतेनार्धर्चपाठेनायं होताऽऽत्मने च स्वार्थमपि यजमानेभ्यश्च सत्रानुष्ठातृबहुयजमानार्थमप्याशिषमेव प्रार्थयते रक्षार्थाय तार्क्ष्यगतेरनिवार्यत्वाभिधानात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टादशाध्याये षष्ठः खण्डः ॥ ६ ॥ (२०) [१४१] ।

---

अथ दूरोहणसूक्तशंसनस्य प्रकारान्तरं विधत्ते—

आहूय दूरोहणं रोहति स्वर्गो वै लोको
दूरोहणं वागाहावो ब्रह्म वै वाक्स यदाह्वयते
तद्ब्रह्मणाऽऽहावेन स्वर्गं लोकं रोहति, इति ।

शोंसावोमित्यध्वर्योराह्वानं कृत्वाऽनन्तरं त्यमूष्वित्यादिकं दूरोहणसूक्तं रोहेदारोहणक्रमेण पठेत् । दूरोहणस्य स्वर्गरूपत्वादाहावस्य वाग्रूपत्वाद्वाचश्च वेदात्मिकाया ब्रह्मत्वात् । प्रथममाह्वाने सति ब्रह्मरूपेणाऽऽहावेन स्वर्गमारोहति ।

अपरं प्रकारविशेषं विधत्ते—

स पच्छः प्रथमं रोहतीमं तं लोकमाप्नोत्यथार्धर्चशोऽन्तरिक्षं तदाप्नोत्यथ त्रिपदयाऽमुं तं लोकमाप्नोत्यथ केवल्या तदेतस्मिन्प्रतितिष्ठति य एष तपति, इति ।

द्वेधा[3] सूक्तस्य शंसनम्, रोहक्रमेणावरोहक्रमेण चेति । तत्राऽऽरोहे चतुर्वारमावर्तनीयम् । प्रथमावृत्तौ पच्छः पादशः पठेत् । एकैकस्मिन्पादेऽवसानं कृत्वा शंसेत् । द्वितीयस्यामावृत्तावर्धर्चश एकैकस्मिन्नर्धेऽवसानं कृत्वा पठेत् । तृती-

१ झ. ट. °मानार्थः । २ ख. °र्थात् । यतो रक्षार्थाय ता° । ३ क. द्विधा ।

यस्यामावृत्तौ त्रिपद्यावृत्त्या पादत्रयेऽवसानं कृत्वा पठेत् । चतुर्थ्यामावृत्तावसानरहितया संपूर्णया शंसेत् । एताभिश्चतसृभिरावृत्तिभिर्लोकत्रयं प्राप्य पश्चात्प्रकाशमानसूर्यमण्डले प्रतितिष्ठति ।

आरोहप्रकारविशेषं विधाय प्रत्यवरोहणं विधत्ते—

त्रिपद्या प्रत्यवरोहति यथा शाखां धारयमाणस्तदमुष्मिँल्लोके प्रतितिष्ठत्यर्धर्चशोऽन्तरिक्षे पच्छोऽस्मिँल्लोक आप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्ति, इति ।

प्रत्यवरोहक्रमे प्रथमावृत्तौ पादत्रयेऽवसानं द्वितीयावृत्तावर्धर्चेऽवसानं तृतीयावृत्तौ पादेऽवसानम् । तथा सति यथा लोके वृक्षाग्रमारुह्य पुरुषः प्रत्यवरोहन्हस्तेन शाखां दृढमवलम्ब्य स्थिरो भवति, एवमयं प्रथमतः स्वर्गे प्रतिष्ठाय पश्चादन्तरिक्षे भूलोके च प्रतितिष्ठति । यथा होतुः प्रतिष्ठा तथा यजमानानामपि । स्वर्गं प्राप्य पुनरागत्यास्मिँल्लोके प्रतितिष्ठन्ति । तावेतावारोहप्रत्यवरोहौ हंसवतीपक्षे तार्क्ष्यपक्षेऽपि समानौ । एवमुच्चारणस्य दुःशकत्वादस्य शंसनस्य दूरोहणसंज्ञा ।

कामनाभेदेन प्रकारान्तरं विधत्ते—

अथ य एककामाः स्युः स्वर्गकामाः पराञ्चमेव तेषां रोहेत्ते जयेयुर्हैव स्वर्गं लोकम्, इति ।

एकस्मिन्नेव लोके कामो येषां त एककामाः स्वर्गं लोकमेव कामयन्ते न त्वेनं लोकं तेषां पराञ्चमेव प्रत्यवरोहरहितमेव रोहेत्, शस्त्रं पठेत् । तावता ते स्वर्गं लोकं जयेयुर्हैव प्राप्नुवन्त्येव ।

अस्मिन्पक्षे कंचिद्दोषं दर्शयति—

नेत्त्वेवास्मिँल्लोके ज्योगिव वसेयुः, इति ।

ते स्वर्गं प्राप्नुवन्त्येव किंत्वत्र दोषोऽस्त्येव । ते यजमाना अस्मिन्नेव लोके ज्योगिव चिरकालमेव नेद्वसेयुः सर्वथा न तिष्ठेयुः । परिभव(य)द्योतकेन नेदित्यनेनाऽऽयुःक्षयहेतुरयं पक्षो दूषितः ।

सूक्तान्तराणि विधत्ते—

मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च

जागतानि च मिथुनं वै पशवः पशवश्छ-
न्दांसि पशूनामवरुद्ध्यै ॥ २१ ॥ इति ।

मिथुनशब्द एकत्वनिवारकस्ततो बहूनीत्युक्तं भवति । यस्तिग्मशृङ्ग इत्यादीनि त्रैष्टुभानि दिवश्चिदस्य वरिमेत्यादीनि जागतानि तदेतच्छन्दोद्वयं मिथुनसदृशम् । पशवोऽपि मिथुनात्मकाश्छन्दांसि च पशुसाधनत्वात्पशवोऽतस्तेषां शंसनं पशुप्राप्त्यै भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टादशाध्याये सप्तमः खण्डः ॥ ७ ॥ (२१) [१४२] ।

---

अथ विषुवन्नामकमहर्विशेषं मनुष्यसाम्येन प्रशंसति—

यथा वै पुरुष एवं विषुवांस्तस्य यथा दक्षिणोऽर्ध
एवं पूर्वोऽर्धो विषुवतो यथोत्तरोऽर्ध एवमुत्तरोऽर्धो
विषुवतस्तस्मादुत्तर इत्याचक्षते प्रबाहुक्सतः शिर
एव विषुवान्बि( न्वि )दलसंहित इव वै पुरुषस्त-
स्माद्धापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते, इति ।

यथा लोकेषु पुरुषो दक्षिणवामभागाभ्यां भागद्वयमध्ये शिरसा च युक्तस्तस्य विषुवतः षण्मासात्मकः पूर्वभागः पुरुषसंबन्धिदक्षिणभागस्थानीयस्तत्रावरोहरूपमासषट्कात्मक उत्तरार्धो वामभागस्थानीयस्तस्माद्वामभागसादृश्यादुत्तर इत्याचक्षते न त्वनुष्ठानाधिक्यविवक्षया । प्रबाहुक्सतो वामदक्षिणभागौ समौ कृत्वाऽवस्थितस्य पुरुषस्य शिरो यथोन्नतं सन्मध्येऽवतिष्ठत एवं मासषट्कयोर्मध्ये विषुवानुत्कृष्टोऽवतिष्ठते । बि(वि)दलं भागस्ताभ्यां बि(वि)दलाभ्यां दक्षिणवामभागाभ्यां संहितः संयोजित एव लोकेषु पुरुषो भवति । तद्धापि तस्मादेव भागद्वयसंधानरूपात्कारणाच्छीर्ष्णो मध्ये स्यूमेव विज्ञायते । स्यूम स्यूतम् । यथा वस्त्रयोः संधिः सूच्या स्यूतः संयोजितो भवति । एवं शिरसि दक्षिणोत्तरकपालयोः संधौ स्यूतेव काचिद्रेखा दृश्यते । एतच्च भूमौ पतिते शुष्के मांसरहिते शिरःकपालद्वयसमूहरूपेऽस्थिनि विस्पष्टमुपलभ्यते । अतः सर्वात्मना पुरुषसादृश्यात्प्रशस्तोऽयं विषुवान् ।

---

१ क. ख. ट. °के पु° ।

अत्र कंचित्पूर्वपक्षमुत्थापयति—

तदाहुर्विषुवत्येवैतदहः शंसेद्विषुवान्वा एतदुक्थाना-
मुक्थं विषुवान्विषुवानिति ह विषुवन्तो भवन्ति
श्रेष्ठतामश्नुवत इति, इति ।

विषुवन्नामके मुख्येऽहनि यच्छस्त्रं विहितं तत्तस्मिञ्शस्त्रे पूर्वपक्षिण एव-माहुः । दक्षिणायनस्योत्तरायणस्य च मध्ये विषुवन्नामकतुलामेषसंक्रान्तिद्वय-रूपो यः कालविशेषः सोऽयं विषुवच्छब्दाभिधेयः । स च व्यवहारः स्मृतिषु प्रचुरः । अस्मिन्नेव विषुवति काल एतदहः शंसेत् । एतस्मिन्नहनि विहितं शस्त्रमहःशब्देनोपलक्ष्यते । एतत्संक्रान्तिद्वयमु( यु ? )क्तमहरुक्तानामह्नां मध्य उक्थशस्त्रोपेतशस्त्रयोग्यमित्यर्थः । अत एव विषुवान्वै विषुवन्नामकशस्त्रवानेव संक्रान्तिकालविशेषः । तत्कथमित्युच्यते । तं संक्रान्तिकालं विषुवान्विषुवानि-त्येव सर्वे व्यवहरन्ति । अतस्तस्मिन्काले शस्त्रपाठे सति यजमाना विषुवन्तो योग्यशस्त्रयुक्ता भवन्ति । सर्वेष्वनुष्ठातृषु श्रेष्ठतां प्राप्नुवन्तीति पूर्वपक्षिणा-माशयः ।

तं पक्षं निराकरोति—

तत्तन्नाऽऽदृत्यं संवत्सर एव शंसेद्रेतो वा एतत्संवत्सरं
दधतो यन्ति, इति ।

कर्मान्तरेष्वपि विषुवाख्यसंक्रान्तियुक्ते काले समागते सति शस्त्रमेतच्छं-सनीयमिति यत्पूर्वपक्षिणां मतं तस्मिञ्शस्त्रे तन्मतं नाऽऽदरणीयम् । किंतु संवत्सरसत्र एव गवामयने तत्पूर्वोक्तं शस्त्रं शंसेत् । एवं सति यजमाना अत्यन्तसंयोगेन संवत्सरंकालमेतद्रेतो धारयन्तो यन्त्यनुतिष्ठन्ति ।

विपक्षे बाधकं दर्शयति—

यानि वै पुरा संवत्सराद्रेतांसि जायन्ते यानि पञ्च-
मास्यानि यानि षण्मास्यानि स्रीव्यन्ति वै तानि
न वै तैर्भुञ्जते, इति ।

संवत्सरधारणात्पुरैव कतिपयमासधारणेन यानि रेतांसि जायन्ते पञ्चमा-ससंबन्धीनि वा षण्माससंबन्धीनि वा तानि स्रीव्यन्ति वै स्रवन्त्येव गर्भ-स्रावो भवति । न तु तैरल्पमासधृतै रेतोभिः पुत्रादिशरीरं भुञ्जतेऽनुभवन्ति ।

---

१ ख. अतस्तस्मि° । २ झ. ट. उक्थ्यश° । ख. उक्थं शस्त्रोपेतं शस्त्र° । ३ ख. °रमेव का° ।

गुणकथनपूर्वकं स्वपक्षमुपसंहरति—

अथ यान्येव दशमास्यानि जायन्ते यानि सांवत्सरिकाणि तैर्भुञ्जते तस्मात्संवत्सर एवैतदहः शंसेत्, इति।

अथ पूर्वोक्तवैपरीत्येन यान्येव रेतांसि दशमास्यानि दशसु मासेषु धृतानि च भूत्वा पश्चाज्जायन्ते यानि च संवत्सरे धृतानि तैः सर्वैः पुत्रादिशरीरमनुभवन्ति। तस्माद्गुणसद्भावात्संवत्सरसत्र एव तस्मिन्विषुवत्यह्नि यथोक्तं शस्त्रं शंसेत्।

पुनरपि प्रकारान्तरेण प्रशंसति—

संवत्सरो ह्येतदहराप्नोति संवत्सरं ह्येतदहराप्नुवन्त्येष ह वै संवत्सरेण पाप्मानमपहत एष विषुवताऽङ्गेभ्यो हैव मासैः पाप्मानमपहते शीर्ष्णो विषुवता, इति।

योऽयं संवत्सरः सत्ररूपः कर्मविशेषो यच्चैतद्विषुवदाख्यमहरुभयोः परस्परं संप्राप्तिरस्ति। तत्र संवत्सरः कर्ता सन्नहराप्नोति। अहश्च कर्तृ भूत्वा संवत्सरमाप्नोति। व्यत्ययेनात्र बहुवचनम्। तयोः परस्परमविनाभावे सत्येष यजमानः संवत्सरेण पाप्मानमपहते विनाशयति। तथैवैष यजमानो विषुवता संवत्सरमध्यगतेनाह्ना पाप्मानं विनाशयति। तद्विविच्यते। संवत्सरावयवैर्मासैर्हस्तपादाद्यङ्गेभ्यः सकाशात्पाप्मानं नाशयति। विषुवता मुख्येनाह्ना शीर्ष्णः शिरसः सकाशात्पाप्मानं नाशयति।

वेदनं प्रशंसति—

अप संवत्सरेण पाप्मानं हतेऽप* विषुवता य एवं वेद, इति।

अथ प्रशस्तस्य विषुवतः प्रसङ्गाद्बुद्धिस्थे प्रशस्ते महाव्रताख्येऽहनि कंचित्पशुं विधत्ते—

वैश्वकर्मणमृषभं सवनीयस्योपालम्भ्यमालभेर-

* अपेत्यस्य संबन्धः केनास्तीति शङ्कासद्भावेऽपि कुतो भाष्यकारेण संबन्धो न प्रदर्शित इति न ज्ञायते। परं च 'अप' इत्यनेन हते, इत्यस्य द्विरावृत्तिः सूचिता स्यादिति प्रतिभाति। तथा च विषुवताऽपहते इति वाक्यं संभवेदिति ज्ञेयम्

१ क. ट. °नः कृत्स्नसं°। ङ. °नः कृत्स्नं सं°।

न्द्विरूपमुभयत एतं महाव्रतीयेऽहनि, इति ।

वैश्वकर्मणं विश्वकर्मदेवताकमृषभं पुंगवं सवनीयस्य चोदकप्राप्तस्य पशोः स्थान उपालम्भनीयं द्विरूपं वर्णद्वयोपेतमुभयत एतं दक्षिणोत्तरपार्श्वयोर्विलक्षणवर्णेन लाञ्छितं पशुं महाव्रतप्रयोगयुक्ते सत्रस्योपान्त्येऽहन्यालभेरन् ।

तत्र देवतां प्रशंसति—

इन्द्रो वै वृत्रं हत्वा विश्वकर्माऽभवत्प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माऽभवत्संवत्सरो विश्वकर्मेन्द्रमेव तदात्मानं प्रजापतिं संवत्सरं विश्वकर्माणमाप्नुवन्तीन्द्र एव तदात्मनि प्रजापतौ संवत्सरे विश्वकर्मण्यन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद य एवं वेद ॥ २२ ॥ इति ।

इन्द्रो वृत्रवधादूर्ध्वं विघ्नकर्तुरभावाद्विश्वकर्मा जगत्पालनरूपकर्मयुक्तोऽभवत् । प्रजापतिश्च प्रजाः सृष्ट्वोत्पाद्य कृत्स्नं जगत्सृष्टिरूपकर्मयुक्तोऽभवत् । स उभयविधो विश्वकर्मा देवः संवत्सरात्मकः । अतः संवत्सरसत्रे द्विरूपपश्वालम्भनेन तदात्मानं संवत्सरात्मानमिन्द्रमेव तथा संवत्सररूपं प्रजापतिमित्युभयविधं विश्वकर्माणं यजमानाः प्राप्नुवन्ति । प्राप्य च तदात्मनि संवत्सरात्मनीन्द्रे संवत्सररूपे प्रजापतौ द्विविधेऽपि विश्वकर्मण्यन्ततः संवत्सरसत्रस्यान्ते प्रतितिष्ठन्त्येव । यः पुनरेवं वेद सोऽपि प्रतितिष्ठति । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

। इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टादशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ (२२) [१४३] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्येऽष्टादशोऽध्यायः ॥ १८ ॥

---

अथैकोनविंशोऽध्यायः ।

---

अभिप्लवः स्यात्षडहोऽथ मास-
द्व्यहोऽथ पूर्वः स्वरसामनामा ।

गवां च शस्त्रस्य ततः प्रशंसा
मध्ये दिवाकीर्त्यमहश्च तस्य ।

अथ द्वादशाहो वक्तव्यः । तदर्थमाख्यायिकामाह—

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमं द्वादशाहमपश्यदात्मन एवाङ्गेषु च प्राणेषु च तमात्मान एवाङ्गेभ्यश्च प्राणेभ्यश्च द्वादशधा निरमिमीत तमाहरत्तेनायजत ततो वै सोऽभवदात्मना प्र प्रजया पशुभिरजायत, इति ।

प्रजापतिः प्रजोत्पादनेनातिप्रभूतः स्यामिति कामयित्वा तत्साधनं निर्णेतुं चित्तैकाग्र्यलक्षणं तपः कृत्वा स्वाभीष्टसाधनत्वेन स्वकीयेषु हस्तपादाद्यङ्गेषु प्राणादिवायुषु चावस्थितं द्वादशाहं दृष्ट्वा तं स्वाङ्गेभ्यः प्राणेभ्यश्च निःसार्य द्वादशधा कृत्वा निर्मितवान् । ततो निर्मितमाहृत्य तेनेष्ट्वा स प्रजापतिरभवत्, भूतिं प्राप्तवान् । आत्मना स्वेनैव रूपेण सर्वाधिको भूत्वा प्रजापशुरूपेण बहुलं प्राजायत ।

वेदनं प्रशंसति—

भवत्यात्मना प्र प्रजया पशुभिर्जायते य एवं वेद, इति ।

अनेनार्थवादेन द्वादशाहयागविधिरुन्नेयः । तथा च शाखान्तरे विधिः श्रूयते–' यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेत प्रैव जायते ' इति ।

सोऽकामयत कथं नु गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वामृद्धिमृध्नुयामिति तं वै तेजसैव पुरस्तात्पर्यभवच्छन्दोभिर्मध्यतोऽक्षरैरुपरिष्टाद्गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वामृद्धिमार्ध्नोत्, इति ।

स प्रजापतिः पुनरेवमकामयत । कथं नु केन खलु प्रकारेण गायत्र्या सर्वतो द्वादशाहं व्याप्य सर्वां भोग्यवस्तुसमृद्धिमाप्नुयामिति विचार्य गायत्री

१ ख. ड. त तत्प्रजा° । २ ख. ड. बहु ।

त्रेधा व्यभजत । ध्वनिरूपं तेज एको भागोऽक्षरसंख्ययाऽभिव्यज्यमानं छन्दो द्वितीयो भागोऽक्षराणि तृतीयो भागः । तैस्त्रिभिर्भागैरादिमध्यावसानेषु सर्वतो द्वादशाहं गायत्र्या व्याप्य समृद्धिं प्राप्तवान् । छन्दोभिरिति बहुवचनं पूजार्थम् ।

वेदनं प्रशंसति—

सर्वामृद्धिमृध्नोति य एवं वेद, इति ।

अथ द्वादशाहस्याहःक्लृप्तिमुपकल्पनामुखेन दर्शयति—

यो वै गायत्रीं पक्षिणीं चक्षुष्मतीं ज्योतिष्मतीं भास्वतीं वेद गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोकमेत्येषा वै गायत्री पक्षिणी चक्षुष्मती ज्योतिष्मती भास्वती यद्द्वादशाहस्तस्य यावभितोऽतिरात्रौ तौ पक्षौ यावन्तराऽग्निष्टोमौ ते चक्षुषी येऽष्टौ मध्य उक्थ्याः स आत्मा, इति ।

आदिमध्यावसानेषु द्वादशाहस्य गायत्र्या व्याप्तत्वादभेदमभिप्रेत्य द्वादशाहमेव गायत्रीशब्देन व्यवहरति । सा च गायत्री पक्षद्वयोपेता चक्षुर्द्वयोपेता ज्योतिःशब्दोपलक्षितमध्यशरीरोपेता तत एव सा भास्वती प्रकाशवती । अहीनसत्राणां सर्वेषां प्रकृतित्वेन भासकत्वाद्भास्वत्त्वम् । ईदृशीं गायत्रीं यो वेद स तामनुष्ठाय यथोक्तगुणवत्त्वविशिष्टया गायत्र्या स्वर्गं लोकं प्राप्नोति । गूढाभिप्रायेण रूपकं परिकल्प्यैषा वा इत्यादिना स्वाभिप्रायः प्रकटी क्रियते । द्वादशाह एव यथोक्तगुणविशिष्टा गायत्री तस्येत्यादिना द्वादशाहे ते गुणाः प्रदर्श्यन्ते । तस्य द्वादशाहस्याऽऽद्यन्तावहर्विशेषावतिरात्रसंस्थौ । तावेव पक्षस्थानीयौ तयोरन्तर्भाविनौ द्वितीयैकादशाहविशेषावग्निष्टोमसंस्थौ । तौ चक्षुःस्वरूपौ । ये च तृतीयमारभ्य दशमपर्यन्ता अष्टावहर्विशेषा मध्ये वर्तन्ते ते सर्वेऽप्युक्थ्यसंस्थाः सोऽष्टाहसमूह आत्मा मध्यशरीरम् ।

वेदनं प्रशंसति—

गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोकमेति य एवं वेद ॥ २३ ॥ ॥इति ।

यथोक्ताहःक्ऌप्तिराश्वलायनाचार्यैर्दर्शिता—'अथ भरतद्वादशाह इममेवैकाहं पृथक्संस्थाभिरुपेयुरतिरात्रमग्रेऽथाग्निष्टोममथाष्टा उक्थ्यानथाग्निष्टोममथाति-रात्रम्' इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये एकोनविंशाध्याये प्रथमः खण्डः ॥ १ ॥ (२३) [१४४]।

———

भरतद्वादशाहं विधाय व्यूढद्वादशाहं विधत्ते—

त्रयश्च वा एते त्र्यहा आदशमम-
हरा द्वावतिरात्रौ यद्द्वादशाहः, इति।

योऽयं व्यूढद्वादशाहोऽस्ति सोऽयमेतादृशः। तत्राऽऽद्यन्तौ यौ द्वावतिरात्रौ प्रथमद्वादशौ यच्च दशममहस्तत्परित्यज्यावशिष्टेष्वहःसु नवसंख्याकेषु त्रयस्त्र्यहाः कर्तव्याः। त्रिरात्रः कश्चित्कर्मविशेषः। सोऽयं त्रिवारमावर्तनीयः। आदश-ममित्यत्र योऽयमाकारः स वर्जनार्थः। निपातानामनेकार्थत्वात्। यद्वा मर्यादा-यामयमाङ्भविष्यति। आद्यन्तावतिरात्रौ दशममहश्च मर्यादां कृत्वाऽवशिष्टो नवरात्रस्त्रिरावृत्तत्र्यहात्मक इत्यर्थः। तत्र चोदकेन दीक्षादिसंख्याविकल्पः प्राप्त एका दीक्षा तिस्रो दीक्षा इत्यादिविकल्पस्य प्रकृतौ श्रुतत्वात्।

तं विकल्पमपवादितुं नियमविशेषं विधत्ते—

द्वादशाहानि दीक्षितो भवति
यज्ञिय एव तैर्भवति, इति।

द्वादशसु दिनेषु दीक्षाख्यनियमेऽनुष्ठिते सति तैर्द्वादशभिर्दीक्षाविशेषैरयं पुरुषो यज्ञयोग्य एव भवति।

उपसत्सुं विशेषं विधत्ते—

द्वादश रात्रीरुपसद उपैति शरीरमेव ताभिर्धूनुते, इति।

प्रकृतौ तिस्र एवोपसदस्ताश्चैकैकां चतुर्षु दिनेष्वावर्त्य द्वादशसु दिनेषूपस-दोऽनुतिष्ठेत्। स ताभिर्द्वादशभिरुपसद्भिः शरीरमेव धूनुते कम्पयति शरीरग-तमांसादिधातुशोषणेन पापक्षयो भवति। तथा च सूत्रकारेणोपसंहृतम्—'यदा वै दीक्षितः कृशो भवति, अथ मेध्यो भवति' इति। उपसद्दिनेष्वस्य क्षीरमा-त्राहारत्वाद्भवत्येव कार्श्यं तदिदं सर्वं धूनुत इत्यनेन विवक्षितम्।

---

१ ख. अतिरात्रं। २ ख. °त्सु यज्ञवि°। ३ क. झ. ट. °नुष्ठिते सति ता°।

अथ द्वादशसु दिनेषु सोमाभिषवं विधत्ते—

द्वादशाहं प्रसुतः, इति ।

भवेदिति शेषः । दीक्षोपसदावङ्गकर्मणी अभिषवस्तु प्रधानकर्म ।

वेदनं प्रशंसति—

भूत्वा शरीरं धूत्वा शुद्धः पूतो
देवता अप्येति य एवं वेद, इति ।

द्वादशाहं प्रसुत इति पदद्वयमनुवर्तनीयम् । वेदिता द्वादशसु दिनेषु सोमाभिषवयुक्तो भूत्वा पूर्वोक्ताभिरुपसद्भिः शरीरं धूत्वा शरीरगतं पापं परित्यज्यात एव शुद्ध इह लोके भूत्वा परलोकेऽपि पूतः सर्वा देवताः प्राप्नोति । अथवा शुद्ध इत्यन्तो विधिवाक्यशेषः । पूत इत्यादिका वेदनप्रशंसा द्रष्टव्या ।

यथोक्तदीक्षोपसत्सुत्यादिनसंख्याः प्रशंसति—

षट्त्रिंशदहो वा एष यद्द्वादशाहः षट्त्रिंशदक्षरा वै बृहती बृहत्या वा एतदयनं यद्द्वादशाहो बृहत्या वै देवा इमाँल्लोकानाश्नुवत ते वै दशभिरेवाक्षरैरिमं लोकमाश्नुवत दशभिरन्तरिक्षं दशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्यामेवास्मिँल्लोके प्रत्यतिष्ठन्, इति ।

यो द्वादशाहोऽस्त्येष पूर्वोक्तरीत्या षट्त्रिंशद्दिनात्मकः । बृहतीछन्दश्च षट्त्रिंशदक्षरं तस्माद्यो द्वादशाहोऽस्त्येतद्बृहत्या अयनं स्थानमित्यर्थः । देवाश्च बृहत्या सर्वाँल्लोकानाश्नुवन्(त) प्राप्नुवन् । दशभिर्दशभिरक्षरैः प्रत्येकं लोकत्रयप्राप्तिः । चतुर्भिरक्षरैर्दिक्चतुष्टयप्राप्तिः । द्वाभ्यामक्षराभ्यामस्मिँल्लोके प्रतिष्ठां प्राप्ताः । तथाविधबृहतीसाम्याद्दिनगता षट्त्रिंशत्संख्या प्रशस्ता ।

वेदनं प्रशंसति—

प्रतितिष्ठति य एवं वेद, इति ।

अत्र किंचिच्चोद्यमुद्भावयति—

तदाहुर्यदन्यानि च्छन्दांसि वर्षीयांसि भूयोक्षरतराण्यथ कस्मादेतां बृहतीत्याचक्षत इति, इति ।

---

१ ख. °थोक्ता दी° । २ ख. °प्रत्स्वित्यादिना सं° ।

यस्मात्कारणाद्बृहत्या अन्यान्युत्तराणि पङ्क्तित्रिष्टुब्जगतीच्छंदांस्युत्तरोत्तरं चतुरक्षराधिकान्यतो वर्षीयांसि। तस्यैव व्याख्यानं भूयोक्षरतराणीति। अथैवं सति पङ्क्त्यादीनि च्छन्दांस्युपेक्ष्य कस्मात्कारणादेतां षट्त्रिंशदक्षरमात्रयुक्तां वैदिका बृहतीत्याचक्षत इति चोद्यम्।

पूर्वोक्तमेवार्थवादमुपजीव्य परिहारमाह—

एतया हि देवा इमाँल्लोकानाश्नुवत ते वै दशभिरेवाक्षरैरिमं लोकमाश्नुवत दशभिरन्तरिक्षं दशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्यामेवास्मिँल्लोके प्रत्यतिष्ठंस्तस्मादेतां बृहतीत्याचक्षते, इति।

अक्षरसंख्यान्यूनत्वेऽपि लोकत्रयप्राप्तिहेतुत्वात्प्रौढत्वमभिप्रेत्य बृहतीत्यभिधानम्।

उक्तार्थवेदनं प्रशंसति—

अश्नुते यद्यत्कामयते य एवं वेद ॥२४॥ इति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनविंशाध्याये द्वितीयः खण्डः ॥२॥ (२४) [१४५]।

---

अस्मिन्काण्डे कर्मणि यजनयाजनयोरधिकारिविशेषौ दर्शयति—

प्रजापतियज्ञो वा एष यद्द्वादशाहः प्रजापतिर्वा एतेनाग्रेऽयजत द्वादशाहेन सोऽब्रवीदृतूंश्च मासांश्च याजयत मा द्वादशाहेनेति तं दीक्षयित्वाऽनपक्रमं गमयित्वाऽब्रुवन्दोहि नु नोऽथ त्वा याजयिष्याम इति तेभ्य इषमूर्जं प्रायच्छत्सैषोर्गृतुषु च मासेषु च निहिता ददतं वै ते तमयाजयंस्तस्माद्ददयाज्यः प्रतिगृह्णन्तो वै ते तमयाजयंस्तस्मात्प्रतिगृह्णता याज्यम्, इति।

यो द्वादशाहः स प्रजापतेर्यज्ञः। कथमिति तदुच्यते। प्रजापतिरेवाग्रे

सर्वेभ्यः पूर्वमेतेन द्वादशाहेनायजत तस्मादयं प्रजापतियज्ञ इति । तद्यजन-प्रकार उच्यते । स प्रजापतिर्वसन्ताद्यृतुदेवांश्चैत्रादिमासदेवांश्चाब्रवीत् । हे देवा यूयमृत्विजो भूत्वा मां द्वादशाहक्रतुना याजयतेति । ते च मासर्तुदेवा ऋत्विजो भूत्वा तं प्रजापतिं दीक्षयित्वा तत्राध्वानमनपक्रमं निर्गमनरहितं गमयित्वाऽब्रुवन् । न हि यज्ञं संकल्प्य दीक्षां कृत्वा तदनुष्ठानमन्तरेण देवयजनदेशान्निर्गन्तुं शक्यते । हे प्रजापते नु क्षिप्रमेव नोऽस्माकं देहि अपेक्षितं प्रयच्छ । अथानन्तरं त्वां याजयिष्याम इत्यृतुभिर्मासैश्चोक्तः प्रजापतिस्तेभ्य ऋतुभ्यो मासेभ्य इषमन्नमूर्जं क्षीरादिरसं प्रायच्छत् । सैषोर्गृतुरूपा मासरूपा, ऋतुषु च मासेषु चेदानीमपि निहिता । अतश्च स्वकालोचितप्रकारेण ऋतुषु मासेषु च प्रवर्तमानेषु गोक्षीरादिबाहुल्यं भवति । ततोऽन्नपाने ददतं तं प्रजापतिं त ऋतवश्च मासाश्चायाजयन् । तस्माद्ददत्पुरुषो याज्यो यष्टुं योग्यः । न हि दानहीनस्याधिकारोऽस्ति । तथा ते मासाश्चर्तवश्च प्रतिगृह्णन्तो वै प्रजापतिदत्ते अन्नपाने स्वीकुर्वन्तः सन्तः प्रजापतिमयाजयन् । तस्मादिदानीमप्यृत्विजा दक्षिणां प्रतिगृह्णता याज्यं यजनं कर्तव्यम् ।

यजमानानामृत्विजां च वेदनं प्रशंसति—

उभये राध्नुवन्ति य एवं विद्वांसो यजन्ते च याजयन्ति च, इति ।

द्वादशाहे दीक्षां प्राप्नुवत्सु यजमानेषु दीक्षाप्राप्तिं प्रशंसति—

ते वा इम ऋतवश्च मासाश्च गुरव इवामन्यन्त द्वादशाहे प्रतिगृह्य तेऽब्रुवन्प्रजापतिं याजय नो द्वादशाहेनेति स तथेत्यब्रवीत्ते वै दीक्षध्वमिति ते पूर्वपक्षाः पूर्वेऽदीक्षन्त ते पाप्मानमपा*हत तस्मात्ते दिवेव दिवेव ह्यपहतपाप्मानोऽपरपक्षा अपरेऽदीक्षन्त ते नतरां पाप्मानमपाहत तस्मात्ते तम इव तम इव ह्यनपहतपाप्मानस्तस्मादेवं विद्वान्दीक्षमाणेषु पूर्वः पूर्व एव दिदीक्षिषेत, इति ।

* व्यत्ययेनैकवचनम् ।

ये पूर्वमृत्विक्त्वेन व्यवस्थिता ऋतवश्च मासाश्च ते वा इमे द्विविधा अपि द्वादशाहे दक्षिणां प्रतिगृह्य गुरव इव पापभारगौरवेणाऽऽक्रान्ता एव वयमित्यमन्यन्त। ततस्ते पापपरिहाराय द्वादशाहेन ऋतुना नोऽस्मान्याजयेति प्रजापतिमब्रुवन्। प्रजापतिरङ्गीकृत्य ते यूयं दीक्षां कुरुध्वमित्यब्रवीत्। तेषु मासेषु पूर्वपक्षाः शुक्लपक्षाभिमानिनो देवा ये सन्ति ते पूर्वे प्रथमभाविनः सन्तो दीक्षामकुर्वत। तादृशास्ते पूर्वपक्षाः स्वकीयं पाप्मानमपाहत नाशितवन्तः। तस्मात्पापराहित्यात्ते शुक्लपक्षा दिवेव दिवसा इव प्रकाशयुक्ता लोकेऽप्यपहतपाप्मानः पुरुषा दिवेव हि दिवसा इव पुण्यरूपेण तेजसा युक्ता भवन्ति। अथापरपक्षाः कृष्णपक्षाभिमानिनो देवा ये सन्ति ते त्वपरे पश्चात्प्रवर्तमाना दीक्षां कृतवन्तस्ते मालिन्यदोषेण पाप्मानं नतरामपाहतातिशयेन विनाशं न कृतवन्तः। तस्मात्कृत्स्नपापविनाशाभावात्ते कृष्णपक्षास्तम इव कृष्णवर्णा दृश्यन्ते तदीयरात्रिषु चन्द्रप्रकाशस्याभावात्। लोकेऽप्यनपहतपाप्मानः पापविनाशरहिताः पुरुषास्तम इव ह्यन्धकारतमोलिप्तत्वेन निन्द्या भवन्ति। तस्मात्कारणादेव पूर्वापरकालवैषम्यं विद्वान्पुरुषो दीक्षमाणेषु यजमानेष्वेकैकस्मात्पूर्वः पूर्व एव पूर्वपक्षे दिदीक्षिषेत दीक्षितुमिच्छेत्।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद, इति।

यजमानपापविनाशहेतुत्वादृत्विजं प्रशंसति—

स वा अयं प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत्ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठंस्त एतेऽन्योऽन्यस्मिन्प्रतिष्ठिता एवं ह वाव स ऋत्विजि प्रतितिष्ठति यो द्वादशाहेन यजते तस्मादाहुर्न पापः पुरुषो याज्यो द्वादशाहेन नेदयं मयि प्रतितिष्ठादिति, इति।

यः प्रजापतिर्द्वादशाहेनायष्ट स प्रजापतिः संवत्सरकालात्मको भूत्वर्तुषु च मासेषु च प्रत्यतिष्ठत्प्रतिष्ठितोऽभवत्। तदार्त्विज्यबलात्प्रजापतेरुत्कर्षात्[1]। ते

---

1 झ. ढ. °त्कर्षत्वात्।

वा इम ऋतवश्च मासाश्च प्रजापतिरूपे संवत्सरे प्रतिष्ठिता अभवन् । प्रजापतिप्रसादेन तत्पापविनाशात् । त एते प्रजापतिर्ऋतवो मासाश्चान्योन्य-पापविनाशादन्योन्यास्मिन्प्रतिष्ठिताः । एवमेवेदानीमपि यो द्वादशाहेन यजते सोऽयमृत्विजि प्रतितिष्ठति । ऋत्विक्प्रसादेन यजमानस्य पापविनाशात् । यस्मादेवं तस्मादभिज्ञा एवमाहुः । पापपुरुषो द्वादशाहेन ऋत्विग्भिर्न याज्य-स्तस्य कर्मण्यार्त्विज्यं न कार्यमिति । अयं पापो मय्यृत्विजि न प्रतितिष्ठात्स-र्वथा मां प्रविशत्ये(त्वे)वमभिजानामीत्यभिप्रायः ।

द्वादशाहं प्रकारान्तरेण प्रशंसति—

ज्येष्ठयज्ञो वा एष यद्द्वादशाहः स वै देवानां ज्येष्ठो य एतेनाग्रेऽयजत श्रेष्ठयज्ञो वा एष यद्द्वादशाहः स वै देवानां श्रेष्ठो य एतेनाग्रेऽयजत, इति ।

यो द्वादशाहोऽस्त्यसौ ज्येष्ठस्य यज्ञः । कथमिति तदुच्यते । यः पुमाने-तेन द्वादशाहेनाग्रे प्रथममयजत स एव देवानां मध्ये ज्येष्ठो वयसा प्रवृद्धो भवति । किंचायं द्वादशाहः श्रेष्ठस्य यज्ञो यः प्रथममयजत स देवेषु मध्ये गुणतः श्रेष्ठः ।

एतां द्वादशाहप्रशंसामुपजीव्याधिकारिविशेषं दर्शयति—

ज्येष्ठः श्रेष्ठो यजेत कल्याणीह समा भवति न पापः पुरुषो याज्यो द्वादशाहेन नेदयं मयि प्रति-तिष्ठादिति, इति ।

पुमान्भ्रातॄणां मध्ये वयसा ज्येष्ठो गुणैः श्रेष्ठश्च तादृशोऽनेन यजेत । त(य)स्मिन्देशे तथाविधकर्तृको याग इहास्मिन्देशे समा कल्याणी भवति। संव-त्सरः सर्वोपद्रवराहितः सुखकरो भवति । यस्माज्ज्येष्ठस्य श्रेष्ठस्य चाधिकार-स्तस्मात्पापः कनिष्ठो गुणहीनश्च पुरुषो न तेन याजनीयः । ऋत्विजि मयि पापी पुरुषोऽयं नैव प्रतितिष्ठत्विति तस्यर्त्विजोऽभिप्रायः ।

प्रकारान्तरेण द्वादशाहं ज्यैष्ठ्यश्रैष्ठ्यहेतुतया प्रशंसति—

इन्द्राय वै देवा ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त सोऽब्रवीद्बृहस्पतिं याजय मा द्वादशाहेनेति तम-

याजयत्ततो वै तस्मै देवा ज्यैष्ठ्याय श्रैष्ठ्यायाति-
ष्ठन्त, इति ।

इन्द्रस्य वयसा ज्येष्ठत्वं गुणैः श्रेष्ठत्वं च देवा नाङ्गीकृतवन्तः । ततः सोऽङ्गीकारो द्वादशाहेन लब्धः ।

वेदनं प्रशंसति—

तिष्ठन्तेऽस्मै स्वा ज्यैष्ठ्याय श्रैष्ठ्याय समस्मिन्स्वाः
श्रेष्ठतायां जानते य एवं वेद, इति ।

अस्मा अस्य वेदितुः स्वा ज्ञातयो ज्यैष्ठ्याय श्रैष्ठ्याय तिष्ठन्ते ज्यैष्ठ्यं श्रैष्ठ्य चाङ्गी कुर्वन्ति । किंचास्मिन्वेदितरि येयं श्रेष्ठता तस्यां ज्ञातयः संजानत ऐकमत्यं प्राप्नुवन्ति ।

यथा(अथ) व्यूह्ळे द्वादशाहे प्रथमदशमद्वादशदिनव्यतिरिक्तो यो नवरात्रस्तत्र ये त्रयस्त्र्यहाः पूर्वमुक्तास्तान्प्रशंसति—

ऊर्ध्वो वै प्रथमस्त्र्यहस्तिर्यङ्मध्यमोऽर्वाङुत्तमः स
यदूर्ध्वः प्रथमस्त्र्यहस्तस्मादयमग्निरूर्ध्व उद्दीप्यत
ऊर्ध्वा ह्येतस्य दिग्यत्तिर्यङ्मध्यमस्तस्मादयं वायु-
स्तिर्यङ् पवते तिरश्चीरापो वहन्ति तिरश्ची ह्येतस्य
दिग्यदर्वाङुत्तमस्तस्मादसावर्वाङ् तपत्यर्वाङ्वर्ष-
त्यर्वाञ्चि नक्षत्राण्यर्वाची ह्येतस्य दिक्सम्यञ्चो
वा इमे लोकाः सम्यञ्च एते त्र्यहाः, इति ।

योऽयं नवरात्रे प्रथमस्त्र्यहः सोऽयमूर्ध्वो वा आरोहप्रकार एव । तद्यथा—गायत्रं प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनमित्ययं स्वभावसिद्धः क्रमस्तस्य व्यत्यासभावादूर्ध्व इत्युच्यते । यस्तु मध्यमस्त्र्यहः सोऽयं तिर्यङ् वर्तते । तद्यथा—जागतं प्रातःसवनं गायत्रं माध्यंदिनं त्रैष्टुभं तृतीयमित्यत्र नात्यन्तमनुक्रमो नाप्यत्यन्तं व्युत्क्रमः । तस्मादयं तिर्यङ् य उत्तमस्त्र्यहः सोऽर्वाङधोमुखः । तद्यथा—त्रैष्टुभं प्रातःसवनं जागतं माध्यंदिनं गायत्रं तृतीयसवनमित्येतदहरर्वाक्त्वम् । प्रथमो जागतान्तो द्वितीयस्त्रैष्टुभान्तस्तृतीयो गायत्रान्त इत्येवमूर्ध्वतिर्यक्त्वार्वाक्त्वानि त्रिष्वपि त्र्यहेषु द्रष्टव्यानि । यस्मात्स प्रथम-

---

१ ख. 'स्तु भूयो स' । २ ख, झ. ट. 'हर्वा' ।

ऽयह ऊर्ध्वस्तस्मात्तदात्मकोऽयमग्निरूर्ध्वाभिमुखो दीप्यते तस्य चाग्नेरूर्ध्वा दिक् प्रिया । मध्यमस्य त्र्यहस्य तिर्यक्त्वात्तद्रूपो वायुस्तिर्यङ् वर्तते । वायुना प्रेरिता आपस्तिरश्चीस्तिर्यग्भूताः प्रवहन्ति । एतस्य वायोस्तिर्यक्त्वात्तिरश्ची दिक् प्रिया । उत्तमस्य त्र्यहस्यार्वाक्त्वात्तद्रूपोऽसावादित्योऽधोमुखस्तपत्यादित्यप्रेरितः पर्जन्योऽधोमुखो वर्षति । आदित्यवन्नक्षत्राण्यर्वाञ्च्यधोमुखानि प्रकाशन्ते । एतस्याऽऽदित्यस्यार्वाची दिक् प्रिया । किंचेमे त्रयो लोकास्तत्तद्वासिनां सुखहेतुत्वात्सम्यञ्चः । एते च त्र्यहा लोकत्रयसाम्येनानुष्ठातॄणां सुखहेतुत्वात्सम्यञ्चः ।

वेदनं प्रशंसति—

सम्यञ्चोऽस्मा इमे लोकाः श्रियै
दीद्यति य एवं वेद ॥ २५ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनविंशाध्याये तृतीयः खण्डः ॥३॥ (२५) [१४६] ।

---

अथ द्वादशाहे दीक्षायाः कालविशेषं विधातुं प्रस्तौति—

दीक्षा वै देवेभ्योऽपाक्रामत्तां वासन्तिकाभ्यां मासाभ्यामन्वयुञ्जत तां वासन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्यां मासाभ्यामन्वयुञ्जत तां हैमन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां शैशिराभ्यां मासाभ्यामन्वयुञ्जत तां शैशिराभ्यां मासाभ्यामाप्नुवन्, इति ।

पुरा कदाचिद्दीक्षा स्त्रीमूर्तिरूपा सती देवेष्वपरक्ता तेभ्यो देवेभ्यो निर्गता। देवाश्च वासन्तिकाभ्यां चैत्रवैशाखमासाभ्यां तां दीक्षामनुगताभ्यां दीक्षामनुगम्यायुञ्जत तद्युक्ता भवाम इत्येवमपेक्षितवन्तः । ततस्त्वरया गच्छन्तीं दीक्षां ताभ्यां मासाभ्यामुत्कर्षेण नोदाप्नुवन्ना[प्तुम]शक्नुवन् । एवं ग्रैष्मवार्षिकशारदेषु मासेषु यथायोगं पदान्यध्याहृत्य व्याख्येयम् । अध्याहारविवक्षा

---

१ क. द. 'स्तद्वा' ।

दर्शयितुमेव हैमन्तिके पर्याये संपूर्णं वाक्यमाम्नातम्। यथोक्तपञ्चर्तुगतैर्मासैस्तत्प्राप्त्यभावेऽपि शैशिरमासाभ्यां तत्प्राप्तिर्जाता।

वेदनं प्रशंसति—

आप्नोति यमीप्सति नैनं द्विष-
न्नाप्नोति य एवं वेद, इति।

वेदिता पुरुषो यं काममाप्तुमिच्छति तमाप्नोति। किंचैनं वेदितारं द्विषन्वैरी न प्राप्नोति।

इदानीं कालं विधत्ते—

तस्माद्यं सत्त्रिया दीक्षोपनमेदेतयोरेव शैशिरयोर्मासयोरागतयोर्दीक्षेत साक्षादेव तद्दीक्षायामागतायां दीक्षते प्रत्यक्षाद्दीक्षां परिगृह्णाति तस्मादेतयोरेव शैशिरयोर्मासयोरागतयोर्ये चैव ग्राम्याः पशवो ये चाऽऽरण्या अणिमानमेव तत्परुषिमाणं नियन्ति दीक्षारूपमेव तदुपनिप्लवन्ते, इति।

यस्माच्छैशिराभ्यां मासाभ्यां देवानां दीक्षाप्राप्तिस्तस्माद्यं पुरुषं द्वादशाहादिसत्रसंबन्धिना दीक्षा प्राप्नुयात्। दीक्षां तत्र करिष्यामीति यस्येच्छा जायते स पुमानेतयोरेव शिशिरसंबन्धिमाघफाल्गुनयोर्मासयोः प्राप्तयोः सतोर्दीक्षां कुर्यात्। तथा सति दीक्षायां साक्षादेवाऽऽगतायां बलात्कारमन्तरेण स्वप्रिये काले स्वतुल्यये(मे?)व समागतायां सत्यामयं दीक्षितो भवति। अतः प्रत्यक्षात्प्रत्यक्षेण दृश्यमानामिव पुरुषां दीक्षां परिगृह्णाति। यस्मादुक्तमासद्वयागमे दीक्षा तस्मात्तयोर्मासयोरागतयोः सतोर्ग्राम्या गवादिपशव आरण्या द्विखुरादिपशवश्चाणिमाणं(नं) कृशत्वं परुषिमाणं पारुष्यं च नियन्ति नितरां प्राप्नुवन्ति। वर्षाशरद्धेमन्तेष्वृतुषु संतापराहित्यात्सर्वत्र हरिततृणं भक्षयित्वा पशवः पुष्टाङ्गाः स्निग्धाश्चावभासन्ते। शैशिर ऋतौ तृणस्य शोषणोपक्रमत्वात्संपूर्णभक्षणाभावेन पशवः कृशा भवन्ति। अत एवास्थिदर्शनात्परुषा दृश्यन्ते। एतच्च युक्तमेव तत्तस्मिञ्शिशिरर्तौ दीक्षारूपमेवोपेत्य नितरां प्लवन्ते

१ क. ग. घ. ङ. च. छ. झ. ट. °माणमे°। २ क. झ. ट. द्विकरा°।

संचरन्ति । दीक्षितोऽपि नियमविशेषैः पीडितः कृशः परुषश्च भवति । अतः पशूनां कृशत्वं पारुष्यं च दीक्षाकाललिङ्गम् ।

दीक्षार्थिनः कंचित्पशुं विधत्ते—

स पुरस्ताद्दीक्षायाः प्राजापत्यं पशुमालभते, इति ।

यो दीक्षां वाञ्छति स पुमान्दीक्षोपक्रमात्पुरा प्रजापतिदेवताकं पशुमालभेत । द्विविधो हि द्वादशाहः । साग्निचित्यो निरग्निचित्यश्च । तत्राग्निचयनयुक्ते पशुरयमवगन्तव्यः ।

सामिधेनीषु चोदकप्राप्तं पाञ्चदश्यमपवादितुं विशेषं विधत्ते—

तस्य सप्तदश सामिधेनीरनुब्रूयात्सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै, इति ।

द्वयोर्धाय्ययोः प्रक्षेपेण सप्तदशसंख्या संपद्यते । सप्तदशत्वं द्वादश मासा इत्यादिना पूर्वमेवोक्तम् । अतः सप्तदशसंख्या प्रजापतेः प्राप्त्यै संपद्यते ।

आप्रीयाज्यासु विशेषं विधत्ते—

तस्याऽऽप्रियो जामदग्न्यो भवन्ति, इति ।

पशोः प्राप्तिहेतुत्वात्प्रयाजा आप्रिया(य) इत्युच्यन्ते। तदत्र जमदग्निना दृष्टाः समिद्धो अद्यमनुषः [ १०-११०-१ ] इत्यादिसूक्ते समाम्नाता द्रष्टव्याः ।

अत्र चोद्यमुद्भावयति—

तदाहुर्यदन्येषु पशुषु यथऋष्याप्रियो भवन्त्यथ कस्मादस्मिन्सर्वेषां जामदग्न्य एवेति, इति ।

उक्तप्राजापत्यपशुव्यतिरिक्तेषु सर्वेषु पशुष्वाप्रियो यथऋषि भवन्ति । यस्य यजमानस्य गोत्रप्रवर्तको य ऋषिर्भवति तमनतिक्रम्य तेन दृष्टा एवाऽऽप्रियो भवन्ति । एवं सत्यत्रापि जमदग्निगोत्रजानामेव समिद्धो अद्येत्याप्रिय ऋचा युक्ता न त्वन्येषाम् । अथैवं सति कस्मात्कारणादस्मिन्पशौ सर्वेषां जमदग्निगोत्रजानामन्येषां चैता एवाऽऽप्रियः क्रियन्त इति चोद्यम् ।

तस्योत्तरमाह—

सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः सर्व-

---

१ द. °लभते । द्वि° ।

रूप एष पशुः सर्वसमृद्धस्तद्यज्जामदग्न्यां भवन्ति सर्वरूपतायै सर्वसमृद्ध्यै, इति।

जमदग्निना दृष्टा ऋचो जामदग्न्यः। सर्वरूपा वै सर्वासामृचां स्वरूपभूता एव सर्वसमृद्धाः। सर्वसमृद्धिफलहेतुत्वात्। एष प्रजापतिदेवताकः पशुरपि सर्वरूपः। प्रजापतेः सर्वदेवतात्मकत्वेन तदीयपशोरपि सर्वपश्वात्मकत्वम्। अतोऽयं पशुरपि सर्वफलसमृद्धिहेतुत्वात्सर्वैः फलैः समृद्धः। तत्तथा सति यज्जामदग्नीनामनुष्ठानं तत्सर्वानुष्ठानसिद्ध्यर्थं सर्वफलसमृद्ध्यर्थं च भवति।

पश्वङ्गे पशुपुरोडाशे विशेषं विधत्ते[1]—

तस्य वायव्यः पशुपुरोळाशो भवति, इति।

तस्य प्राजापत्यस्य पशोर्वायुर्देवता यस्य पुरोडाशस्य सोऽयं वायव्यः।

अत्र चोद्यमुद्भावयति—

तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्माद्वायव्यः पशुपुरोळाशः क्रियत इति, इति।

यद्यस्मात्कारणादन्यदेवत्य उत वायुव्यतिरिक्तप्रजापतिदेवताक एवायं पशुर्भवति तस्मात्पुरोडाशोऽपि प्रजापतिदेवताक एव युक्तः। यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इत्यभिधानात्। अथैवं सति प्रजापतिं परित्यज्य कस्मात्कारणात्पुरोडाशो वायुदेवताकः क्रियत इति चोद्यम्।

तस्योत्तरमाह—

प्रजापतिर्वै यज्ञो यज्ञस्यायातयामताया इति ब्रूयाद्यदु वायव्यस्तेन प्रजापतेर्नैति वायुर्ह्येव प्रजापतिः, इति।

पशुरूपस्य यज्ञस्य प्रजापतिदेवतात्मकत्वेन प्रजापतिरूपत्वम्। तादृशस्यास्य यज्ञस्य पशुहविषि पुरोडाशे तद्दैवतैक्ये सति यातयामत्वमसारत्वमालस्यकारणं भवेत्। सति हि भेदे भिन्नदेवताकं कर्माऽऽलस्यरहितं भवति। तस्मादयातयामतायै निःसारत्वरूपालस्यपरिहाराय देवतान्तरं युक्तमित्युत्तरं ब्रूयात्। न च वायुदेवताकत्वे प्रजापतेः सकाशात्पुरोडाशोऽपगच्छतीति शङ्कनीयम्। वायुप्रजापत्योः कार्यकारणभावेनैकत्वे सति वायव्यस्यैव प्राजापत्य-

[1] ख. °शेषान्विध°।

त्वात् । तदिदमुच्यते—यदु वायव्यस्तेन प्रजापतेर्नैतीति । नापगच्छतीत्यर्थः ।

वायुप्रजापत्योरेकत्वं मन्त्रसंवादेन द्रढयति—

तदुक्तमृषिणा पवमानः प्रजापतिरिति, इति ।

त्वष्टारमग्रजां गोपामित्यस्या ऋचश्चतुर्थपादे यः पवमानो वायुः स प्रजापतिरिति तादात्म्यं सामानाधिकरण्येन दर्शितम् । पूर्वं भरतद्वादशाहो व्यूह्ळद्वादशाहश्चेति द्वौ द्वादशाहभेदावुक्तौ । प्रकारान्तरेणापि सत्ररूपोऽहीनरूपश्चेत्येवं द्विविधो द्वादशाहः ।

तत्र सत्रपक्षे विशेषान्विधत्ते—

सत्रमु चेत्संन्युप्याग्नीन्यजेरन्सर्वे दीक्षेरन्सर्वे सुनुयुर्वसन्तमभ्युदवस्यत्यूर्ग्वै वसन्त इषमेव तदूर्जमभ्युदवस्यति ॥ २६ ॥ इति ।

सत्रमु चेत्, यद्ययं द्वादशाहः सत्ररूपो भवेत्तदानीं सत्रस्य बहुयजमानत्वात्सर्वेषां यजमानानामग्नीन्संन्युप्य संभूयैकत्वेनावस्थाप्य तस्मिन्सर्वे यजेरन् । यजमानत्वादेव सर्वेऽपि दीक्षेरन्दीक्षां कुर्युः । य एव यजमानास्त एव ऋत्विज इत्युक्तत्वेन सर्वे यजमानाः सुनुयुर्ऋत्विक्कार्यमभिषवं कुर्युः । वसन्तर्तुमभिलक्ष्योदवस्यति, उदवसानीयां समाप्तिकालीनामिष्टिमनुतिष्ठेत् । वसन्ततौ समापयेदित्यर्थः । वसन्तकाले सति फलानां गृहेष्वागमनेन रसबाहुल्यादूर्ग्वै रस एव वसन्तः । तथा सत्ये( ति )तदेतत्समापनेनेषमन्नमूर्जं रसं वाऽभिलक्ष्योदवस्यति यजमानसंघो द्वादशाहं समापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनविंशाध्याये चतुर्थः खण्डः ॥४॥ (२६) [१४७]।

---

अथ व्यूह्ळद्वादशाहे यदेतद्व्यूह्ळत्वं तदेतत्प्रशंसितुमाख्यायिकामाह—

छन्दांसि वा अन्योन्यस्याऽऽयतनमभ्यध्यायन्गायत्री त्रिष्टुभश्च जगत्यै चाऽऽयतनमभ्यध्यायत्त्रिष्टुब्गायत्र्यै च जगत्यै च जगती गायत्र्यै च त्रिष्टुभश्च ततो वा एतं प्रजापति-

---

१ ख. °तद्वक्तसमा° ।

व्यूहूळच्छन्दसं द्वादशाहमपश्यत्तमाहरत्तेनाय-
जत तेन स सर्वान्कामांश्छन्दांस्यगमयत्, इति।

गायत्री त्रिष्टुब्जगतीत्येतानि त्रीणि च्छन्दांस्यन्योन्यस्याऽऽयतनमभिप्राप्नु-मध्यायन्स्वस्वमनस्यचिन्तयन्। तेषां च त्रयाणां छन्दसां क्रमेण सवनत्रयं स्थानम्। तत्र गायत्री त्रिष्टुब्जगत्योः स्थाने माध्यंदिनसवनतृतीयसवने ध्यातवती। त्रिष्टुप्स्वस्थानव्यतिरिक्तं स्थानद्वयमभ्यध्यायत्। तथा जगत्यपि। ततः प्रजापतिश्छन्दसामभिलाषं दृष्ट्वा तत्संपादनक्रमेण तं व्यूहूळच्छन्दसं द्वादशाहमपश्यत्। स्वस्वस्थानविपरीतत्वेनोढानि स्थानान्तरे प्रक्षिप्तानि च्छन्दांसि यस्मिन्द्वादशाहे सोऽयं व्यूहूळच्छन्दाः। तादृशं द्वादशाहं दृष्ट्वा तत्साधनान्याहृत्य तेनेष्ट्वा स प्रजापतिस्तेषामपेक्षितान्स्थानविपर्यासलक्षणान्सर्वान्कामान्गायत्र्यादिच्छन्दांसि प्रापितवान्।

वेदनं प्रशंसति—

सर्वान्कामान्गच्छति य एवं वेद, इति।

इदानीं व्यूहनं विधत्ते—

छन्दांसि व्यूहत्ययातयामतायै, इति।

गायत्र्यादीनि च्छन्दांसि व्यूहति तत्तदायतनविपर्यासेनावस्थापयेत्। तच्च व्यूहनमसारत्वप्रयुक्तालस्यपरिहाराय भवति।

उक्तव्यूहनमनूद्य प्रशंसति—

छन्दांस्येव व्यूहति तद्यथाऽदोऽश्वैर्वाऽनळुद्भिर्वाऽ-
न्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं यान्त्येव-
मेवैतच्छन्दोभिरन्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपवि-
मोकं स्वर्गं लोकं यन्ति यच्छन्दांसि व्यूहति, इति।

गायत्र्यादीनि च्छन्दांस्यस्मिन्द्वादशाहविशेषे व्यूहत्येव न त्वत्र संदेहः कार्यः। तत्तस्मिन्व्यूहने यथा लोकेऽदो निदर्शनं तन्न्यायो द्रष्टव्यः। किं निदर्शनमिति तदुच्यते। ये राजानो रथमारुह्य तत्रत्यैरश्वैर्दूरदेशं गच्छन्ति ते राजानो योजने योजन उपविमोकं श्रान्तानश्वानुपविमुच्योपविमुच्यान्यैरन्यैः पुनः पुनर्नूतनैर्दूरदेशं यान्ति। तत्रोपपत्तिरश्रान्ततरैरिति। अतिशयेन श्रमरहितैः। पौनःपुन्यं द्योतयितुं वाऽऽवृत्तिश्च। लाङ्गले घटीयन्त्रे वा तदा तदा

श्रान्तानश्वाननडुहो वा विमुच्य विमुच्य नूतनैरनडुद्भिः प्रवर्तन्त एवमेवात्रापि च्छन्दसां स्थानविपर्यासे सति स्वस्वस्थाने श्रान्तानि च्छन्दांसि पुनः पुनरुपविमुच्य तदा तदा नूतनैश्छन्दोभिः सत्रिणः स्वर्गं लोकं गच्छन्ति । यदा च्छन्दांसि व्यूहति तदानीमेतदिति द्रष्टव्यम् ।

अथ बृहद्रथंतरसामनी उपाख्यानेन प्रशंसति —

इमौ वै लोकौ सहाऽऽस्तां तौ व्यैतां नावर्षन्न समतपत्ते पञ्चजना न समजानत तौ देवाः समनयंस्तौ संयन्तावेतं देवविवाहं व्यवहेतां रथंतरेणैवेयममूं जिन्वति बृहताऽसाविमाम्, इति ।

इमौ भूलोकस्वर्गलोकौ पूर्वस्मिन्काले सहैवाऽऽस्तामत्यन्तं प्रीतियुक्तावेकत्रैवावस्थितौ । कदाचित्तावुभौ केनापि निमित्तेन व्यैतां वियोगं प्राप्तवन्तौ परस्पराविरोधेन सहवासं परित्यज्य दूरदेशेऽवस्थितौ तदानीं द्युलोकवर्ती पर्जन्यो नावर्षद्वृष्टिं न संपादितवान् । आदित्यश्च द्युलोकवर्ती न समतपत्, आतपरूपं प्रकाशं न कृतवान् । तदानीं ते पञ्चजनाः पूर्वोक्ता देवमनुष्यादयः पञ्चविधाः प्राणिनो न समजानतान्धकारग्रस्ताः सन्तः कमपि मार्गमज्ञात्वा परस्परैकमत्यरहिता अभवन् । तदानीं ताद्दशः[1] प्राणिनो दृष्ट्वा तावुभौ लोकौ समनयन्परस्परसंगतिं प्रापितवन्तः । तावुभौ लोकौ संयन्तौ परस्परसंगमं प्राप्तवन्तावेतं परस्परोपकाररूपं देवविवाहं देवानामुचितं विवाहं व्यवहेतां विविधत्वेन कृतवन्तौ । लोकेऽपि विवाहो नाम परस्परविपर्यासेन संबन्धप्रापणम् । तथाहि । वरस्य पिता स्वपुत्रं कन्यापितुर्जामातृत्वेन संबन्धयति । कन्यापिता च स्वपुत्रीं वरपितुः स्नुषात्वेन संबन्धयति । तदिदं विपर्यासेन संबन्धनयनं विवाहः । तयोश्च विवाहे परस्परगृहभोजनवस्त्रप्रदानाद्युपचारं च कुर्वन्ति । एवमेतौ लोकौ परस्परमुपकुरुतः । तत्रेयं भूमिः साम्ना रथंतरेण तन्नामकेनैवामूं दिवं जिन्वति प्रीणयति । असौ द्यौश्चेमां भूमिं बृहता साम्ना जिन्वति । तत[2] एव सर्वत्रेयं वै रथंतरमसौ बृहदिति लोकद्वयरूपेण सामद्वयं स्तूयते ।

द्वादशाहे बृहद्रथंतरयोरपेक्षितत्वेन प्रशंसां कृत्वा तत्प्रसङ्गाल्लोकद्वयस्यान्यानपि परोपकारान्दर्शयति —

नौधसेनैवेयममूं जिन्वति श्यैतेनासाविमां धूमेनैवेय-

---

१ ख. तादृशाः । २ ख. अत ।

ममूं जिन्वति वृष्ट्याऽसाविमां देवयजनमेवेयममुष्या-
मदधात्पशूनसावस्याम्, इति ।

इममिन्द्र सुतं पिब [१–८४–४] इत्यस्यामृच्युत्पन्नं साम नौधसम् । त्वामिदा ह्यो नरः [८–९९–१] इत्यस्यामृच्युत्पन्नं साम श्यैतम् । ताभ्यां लोकयोः परस्परं प्रीतिः । भूमावग्निजन्यो धूमो दिवि गच्छति । द्युलोकात्समुत्पन्ना वृष्टिरुर्व्यां गच्छति । सोऽयं धूमवृष्टिभ्यां परस्परोपकारः । देवयजनं देवयागयोग्यं कंचिद्देशमियं भूमिरमुष्यां दिव्यदधात् । असौ च द्यौः पशूनस्यां भूमावदधात् । अतो देवयजनपशुभ्यां परस्परोपकारः ।

तत्र देवयजनशब्देन विवक्षितमर्थं व्याचष्टे—

एतद्वा इयममुष्यां देवयजनमदधाद्यदेतच्चन्द्रमसि
कृष्णमिव, इति ।

चन्द्रमण्डले शशमृगादिशब्देन लोके व्यवह्रियमाणं यदेतत्कृष्णमिव कृष्णवर्णमिव रूपं दृश्यत एतदेव देवयजनं देवयागयोग्यं वस्तु, इयं भूमिरमुष्यां दिवि स्थापितवती ।

चन्द्रमसि कृष्णरूपप्रसङ्गाद्यागेषु मुख्यत्वेन शुक्लपक्षं विधत्ते—

तस्मादापूर्यमाणपक्षेषु यजन्त एतदेवोपेप्सन्ते, इति ।

यस्माद्यागयोग्यं कृष्णं चन्द्रमसि स्थितं तस्मात्कारणाच्छुक्लपक्षेषु यागं कुर्वन्तो यजमाना एतदेव चन्द्रमण्डलमुपाप्तुमिच्छन्ति । दिने दिने वर्धमानया कलया सर्वतः पूर्यमाणं चन्द्रमण्डलमेषु शुक्लपक्षेषु तेनाऽऽपूर्यमाणपक्षाः । कर्मिणां दक्षिणमार्गेण चन्द्रमण्डलप्राप्तिः सर्वासूपनिषत्सु प्रसिद्धा ।

देवयजनशब्दं व्याख्याय पशुशब्दं व्याचष्टे—

ऊषानसावस्यां तद्धापि तुरः कावषेय उवाचोषः
पोषो जनमेजय केति तस्माद्धाप्येतर्हि गव्यं मीमां-
समानाः पृच्छन्ति सन्ति तत्रोषाः३ इति । ऊषो
हि पोषोऽसौ वै लोक इमं लोकमभिपर्यावर्तत, इति ।

१ ख. प्राप्तिः ।

असौ द्युलोकोऽस्यां भूमावूषानादधातीत्यध्याहारः । देशान्तरप्रसिद्धि-मुपजीव्य पशुशब्दस्योषशब्दो व्याख्यानम् । वश कान्ताविस्यस्माद्धातो-रूषशब्दो निष्पन्नः । ऊषाः कमनीयाः । पशूनां चमरादीनां कमनीयत्वं प्रसिद्धम् । ऊषशब्दव्यवहार एव तद्धापीत्यादिना प्रदर्श्यते । यस्मादूषः पशुरिति देशविशेषे पर्यायत्वेन प्रसिद्धौ तद्धापि तस्मादेव कारणात्तुरनामकः कश्चिन्महर्षिः कवषस्य पुत्रो जनमेजयनामानं राजानं संबोध्यैवमुवाच । हे जन-मेजय क ऊषः पोषशब्दाभिधेयपुष्टिहेतुः पशुरिति । यस्मात्तूषशब्दं पशुषु व्याज-हार तस्माद्ध तस्मादेव कारणादिदानीमपि गव्यं मीमांसमानाः केचिद्देशविशे-षेषु गोरसं क्षीरादिकं विचारयन्त एवं पृच्छन्ति । तत्र तेषु देशेषु किमूषाः सन्तीति गोविषयः प्रश्नस्तेषामभिप्रेतः । प्रश्नार्था प्लुतिः । यस्मादूषशब्दवाच्यः पोषहेतुर्गवादिरूपः पशुस्तस्मादूषशब्देन पशुशब्दव्याख्यानमुचितम् । असौ द्युलोक इमं भूलोकमभिलक्ष्य पर्यावर्तत । तेन पशुनोपकृतवानित्यर्थः ।

इत्थं बृहद्रथंतरप्रसङ्गेन द्यावापृथिव्योः परस्परमुपकारं बहुधा प्रपञ्च्यो-पसंहरति—

तती वै द्यावापृथिवी अभवतां न द्यावाऽ-
न्तरिक्षान्नान्तरिक्षाद्भूमिः ॥ २७ ॥ इति ।

ततो वै तस्मादेव परस्परोपकारकत्वकारणाद्द्यावपृथिव्यौ वियुक्ते अपि पर-स्परैकमत्येन प्राण्युपकारिण्यावभवताम् । न च तत्रान्तरिक्षलोकः कुत्र वर्तत इति शङ्कनीयम् । द्यावा द्युलोको नान्तरिक्षलोकादन्य इति शेषः । भूमिर्ना-न्तरिक्षादन्या । उभयोर्द्यावापृथिव्योरन्तरिक्षेण संबध्यैवावस्थानात् । तस्माद्व-र्णितयोर्द्यावापृथिव्योरेवान्तरिक्षस्यान्तर्भाव इत्यभिप्रायः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्य एकोनविंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (२७) [१४८] ।

---

* अथास्मिन्द्वादशाहमध्ये पृष्ठ्यषडहे पृष्ठस्तोत्रोपयुक्तानि सामानि विधातु-माख्यायिकामाह—

बृहच्च वा इदमग्रे रथंतरं चाऽऽस्तां वाक्च
वै तन्मनश्चाऽऽस्तां वाग्वै रथंतरं मनो बृह-

---

* ख. पृष्ठस्तोत्राणां छन्दसामुत्पत्तिरुच्यते । अ° ।

तद्बृहत्पूर्वं ससृजानं रथंतरमत्यमन्यत तद्र-
थंतरं गर्भमधत्त तद्वैरूपमसृजत, इति।

ये बृहद्रथंतरे पूर्वमिमे वै लोकावित्यादिना संस्तुते ते उभे एवेदं वैरूपादि-सामजातमन्तर्भाव्य तदुत्पत्तेः पूर्वमास्ताम्। इदं वैरूपादि सामजातमुत्पत्तेरग्रे पूर्वं नाऽऽसीत्। ते च सामनी मनोवाग्रूपे अभवताम्। तत्र वागेव रथंतरं साम मनो बृहत्साम। तदेतन्मनोरूपं बृहत्साम ससृजानं सृष्टिं कर्तुमुद्युक्तम्। तत्पूर्वं प्रथमत एव सृष्टिसिद्ध्ये वाग्रूपं रथंतरं सामात्यमन्यत। वाग्रूपत्वादेव स्त्रीरूपत्वम्। मनोरूपत्वात्स्वस्य पुरुषरूपत्वम्। तस्मादतिशयितं तत्स्वरूपं ध्यातवद्बृहत्साम स्वस्य पुरुषत्वाभिमानेन रथंतरसाम्नि स्त्रीत्वभावनया सङ्गमकरोदित्यर्थः। ततः स्त्रीस्थानीयं तद्रथंतरं साम स्वोदरमध्ये गर्भमधत्त। धृत्वा च वैरूपाख्यं पुत्रस्थानीयं सामान्तरमसृजत।

वैरूपस्योत्पत्तिमभिधाय वैराजसाम्न उत्पत्तिं दर्शयति—

ते द्वे भूत्वा रथंतरं च वैरूपं च बृहदत्यम-
न्येतां तद्बृहद्गर्भमधत्त तद्वैराजमसृजत, इति।

मातृस्थानीयं रथंतरं पुत्रस्थानीयं वैरूपं चेति ते सामनी द्वे भूत्वा यद्बृहत्सामैकाकित्वेन वर्तमानमस्ति तदत्यमन्येतां तस्माद्बृहतोऽप्येकाकिनोऽतिशयेन मन्येतां न्यूनत्वेन बृहत्साम्नि स्त्रीत्वबुद्धिं कृत्वा संयोगमकुरुताम्। तत्र बृहत्साम गर्भं धृत्वा वैराजाख्यं सामान्तरमसृजत।

शाक्वरसाम्न उत्पत्तिं दर्शयति—

ते द्वे भूत्वा बृहच्च वैराजं च रथंतरं च वैरूपं चात्य-
मन्येतां तद्रथंतरं गर्भमधत्त तच्छाक्वरमसृजत, इति।

वैराजसाम्नः सृष्टेरूर्ध्वं तद्युक्तस्य बृहत्साम्नो न्यूनत्वेऽपगते सति ते सामनी द्वे भूत्वा मिलित्वा वैरूपसहितस्य रथंतरस्य वाग्रूपत्वेन[1] स्त्रीत्वमभिप्रेत्य स्त्रीत्वमत्यमन्येतां स्वाधिकां[2] मत्वा संयोगमकुरुताम्। ततो रथंतरसाम गर्भं धृत्वा शाक्वराख्यं सामान्तरमसृजत।

रैवतसाम्न उत्पत्तिं दर्शयति—

तानि त्रीणि भूत्वा रथंतरं च वैरूपं च

१ ख. °परूपत्वा°। २ झ. ट. °धिकामम°।

शाक्वरं च बृहच्च वैराजं चात्यमन्यन्त
तद्बृहद्गर्भमधत्त तद्रैवतमसृजत, इति ।

मातृस्थानीयं रथंतरं पुत्रस्थानीये वैरूपशाक्वरे चेत्येवं त्रीणि भूत्वा वैराजेन युक्तस्य बृहत्साम्नो न्यूनत्वबुद्ध्या तदत्यमन्यन्त । तस्मादातिशयं पुरुषस्थानीयं स्वपक्षे मत्वा संयोगमकुर्वत । ततो बृहद्गर्भमधत्त । गर्भं धृत्वा रैवताख्यं सामान्तरमसृजत ।

उक्तानां षण्णां साम्नां पृष्ठस्तोत्रसाधनत्वं दर्शयति—

तानि त्रीण्यन्यानि त्रीण्य-
न्यानि षट्पृष्ठान्यासन्, इति ।

तानि पूर्वोक्तानि रथंतरवैरूपशाक्वराणि त्रीणि सामान्यन्यानीतरेभ्यो विलक्षणानि पृष्ठ्याख्ये षडहे प्रथमतृतीयपञ्चमेष्वयुग्मेष्वहःसु पृष्ठस्तोत्रनिष्पादकान्यासन् । तथा बृहद्वैराजरैवतरूपाणि त्रीणि सामान्यन्यानि रथंतरादिभ्यो विलक्षणानि भूत्वा द्वितीयचतुर्थषष्ठेषु युग्मरूपेष्वहःसु पृष्ठस्तोत्रनिष्पादकान्यासन् ।

अथ षड्विधपृष्ठस्तोत्रसामाधारत्वेन षड्विधानि च्छन्दांसि दर्शयति—

तानि ह तर्हि त्रीणि च्छन्दांसि षट्पृष्ठानि
नोदाप्नुवन्सा गायत्री गर्भमधत्त साऽनुष्टुभम-
सृजत त्रिष्टुब्गर्भमधत्त सा पङ्क्तिमसृजत जगती
गर्भमधत्त साऽतिच्छन्दसमसृजत तानि त्रीण्य-
न्यानि त्रीण्यन्यानि षट्छन्दांस्यासन्षट्पृष्ठानि
तानि तथाऽकल्पन्त कल्पते यज्ञोऽपि, इति ।

तर्हि तस्मिन्षट्सामसंपत्तिकाले गायत्रीत्रिष्टुब्जगतीरूपाणि च्छन्दांसि त्रीणि भूत्वा तानि पूर्वोक्तानि षट्पृष्ठसामानि नोदाप्नुवन्पृष्ठानां निष्पत्तिं कर्तुं नाशक्नुवन् । ततो गायत्र्यादीनि त्रीण्यपि गर्भं धृत्वा पुनरन्यान्यनुष्टुप्पङ्क्त्यतिच्छन्दोरूपाणि च्छन्दांस्यसृजन्त । ततस्तानि सिद्धानि गायत्र्यादीनि त्रीण्यन्यानि पूर्वसिद्धत्वेनैव पृथग्भावात्तान्यासन् । तथैवानुष्टुबादीनि त्रीण्यन्यानि च्छन्दांसि तदानीमुत्पन्नानीति मिलित्वा षट्छदांस्यासन् । ततः षट्संख्याकानि पृष्ठसामानि धारयितुं तानि षट्छन्दांसि तथाऽकल्पन्त तेनैव

क्रमेण समर्थान्यभवन् । प्रथमद्वितीयतृतीयेष्वहःसु गायत्रीत्रिष्टुब्जगत्यः पृष्ठस्तोत्रनिष्पाद(दि)काश्चतुर्थपञ्चमषष्ठेष्वहःस्वनुष्टुप्पङ्क्त्यतिच्छन्दांसि स्तोत्रनिष्पादकानि । एवं सति यज्ञोऽपि पृष्ठ्यः षडहाख्यः कल्पते स्वप्रयोजनाय समर्थो भवति ।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

तस्यै जनतायै कल्पते यत्रैवमेतां छन्दसां च पृष्ठानां च क्लृप्तिं विद्वान्दीक्षते दीक्षते ॥ २८ ॥ इति ।

यत्र यस्यां जनतायामेवमुक्तप्रकारेण गायत्र्यादिच्छन्दसां रथंतरादिपृष्ठानां चैतां क्लृप्तिं कल्पनाप्रकारं जानीते स दीक्षां प्राप्नोति । स पुमांस्तस्यै जनतायै तस्यां यज्ञसभायां कल्पते समर्थो भवति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनविंशाध्याये षष्ठः खण्डः ॥६॥ (२८) [१४९] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्य एकोनविंशोऽध्यायः ॥ १९ ॥

अथ विंशोऽध्यायः ।

ज्योतिष्मत्यो भारतो द्वादशाहो
दीक्षाकालो याजनं पाशुकं च ।
व्यूढच्छन्दोद्वादशाहप्रशंसा
पृष्ठादीनां छन्दसां तत्र क्लृप्तिः ।

इदानीं द्वादशाहक्रतौ प्रायणीयोदयनीयावतिरात्रौ यच्च दशममहस्तत्त्रितयं वर्जयित्वा यो नवरात्रस्तं विधातुमुपक्रमते—

अग्निर्वै देवता प्रथममहर्वहति त्रिवृत्स्तोमो रथंतरं साम गायत्री छन्दः, इति ।

देवतानामग्र्यो योऽयमग्निरस्ति सोऽयमत्र देवता भूत्वा नवरात्रस्य प्रथममहर्वहति निष्पादयति । तथा स्तोमानां मध्ये त्रिवृत्स्तोमः प्रथमस्याह्नो

निर्वाहकः । साम्नां मध्ये रथंतराख्यं साम प्रथमस्याह्नः पृष्ठसामानिर्वाहकम् । छन्दसां मध्ये गायत्रीछन्दः प्रथमस्याह्नो निर्वाहकम् ।

उक्तार्थवेदनं प्रशंसति—

यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद, इति ।

यः पुमानेवमग्नित्रिवृद्रथंतरगायत्रीछन्दसां प्रथमेऽहानि देवतात्वं स्तोमत्वं पृष्ठसामत्वं छन्दस्त्वं च क्रमेण वेद स पुमाननेन वेदनेन यथादेवतं तस्याह्न उचितां देवतामनतिक्रम्य तथा स्तोमसामच्छन्दांस्यप्युचितान्यनतिक्रम्य समृद्धो भवति ।

प्रथमेऽह्नि विनियोज्यान्मन्त्रविशेषानादौ तावल्लक्षणमुखेन संक्षिप्य दर्शयति—

यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितो यद्राथंतरं यद्गायत्रं यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाणि, इति ।

यद्वै यस्मिन्नेव मन्त्र एति च । आकारस्वरनिर्देशार्थमिति चशब्द उपरि प्रयुक्तः । उपसर्गेषु मध्ये योऽयमाङस्ति सोऽयमेतिपरो निर्दिश्यते । तथा प्रेत्युपसर्गनिर्देशः । आ प्रेत्यनयोरुपसर्गयोरन्यतर उपसर्गो यस्मिन्मन्त्रेऽस्ति तन्मन्त्रस्वरूपं प्रथमस्याह्नो रूपम् । लक्षणमित्यर्थः । तथा यन्मन्त्रस्वरूपं युक्तवद्युजिधातूपेतं रथवद्रथशब्दोपेतमाशुमदाशुशब्दोपेतं पिबवत्पिबतिधातूपेतम् । तथा मन्त्रस्य प्रथमे पादे देवता निरुच्यते निर्दिश्यते । तथाऽयं लोको भूलोकोऽभ्युदितः कथितो भवति । तथा यद्राथंतरं रथंतरसामसंबन्धि गायत्रं गायत्रीछन्दसः संबन्धि गायत्रं साम वा । करिष्यत्करोतेर्धातोर्भविष्यत्प्रत्ययान्तमीदृशं यद्यदस्त्येतानि वै सर्वाण्यपि प्रथमस्याह्नो रूपाणि निरूपकाणि । लक्षणानीत्यर्थः ।

एवं लक्षणमुखेन मन्त्रविशेषान्विधाय प्रतीकोदाहरणेन विस्पष्टं विधत्ते—

उप प्रयन्तो अध्वरमिति प्रथ-

---

उप प्रयन्तो अध्वरं०— १–७४–१ ।

---

१ क. ङ. ट. 'यमन्वेति परोक्षमि' । २ ख. 'त्करिष्यते करो' ।

मस्याह्न आज्यं भवति, इति ।

प्रकृतौ प्र वो देवायाग्नय इत्यादिशस्त्रं तद्बाधित्वा नवरात्रस्य प्रथमेऽहन्युप प्रयन्त इति सूक्तेनाऽऽज्यशस्त्रं शंसनीयम् ।

तस्मिन्सूक्ते पूर्वोक्तलक्षणेष्वेकं लक्षणं योजयित्वा दर्शयति—

प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

प्रशब्दरूपोऽयमुपसर्गः सोऽयं सूक्तगते प्रयन्त इति पदे दृश्यते । अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात्प्रथमस्याह्नोऽनुकूलम् ।

मन्त्रान्तरे लक्षणान्तरं दर्शयति—

वायवा याहि दर्शतेति प्रउगमेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

यद्यपि वायवा याहीत्यादिकस्य प्रोपसर्गस्य प्राकृतत्वाच्चोदकेनैव तत्प्राप्तिस्तथाऽपि लक्षणं दर्शयितुमयमुपन्यासः । एत्याकाररूपं पदमत्रास्त्यायाहीति श्रुतत्वात् । अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात्प्रथमस्याह्नो रूपम् ।

अथ तृचद्वये लक्षणद्वयं दर्शयति—

आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ रथवच्च पिबवच्च प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

आ त्वा रथमिति तृचो मरुत्वतीयशस्त्रस्य प्रतिपत्तच्च रथशब्दोपेतमिदं वसो सुतमिति तस्य शस्त्रस्यानुचरस्तच्च पिबवत्पिबासुपूर्णमिति द्वितीयपादे श्रुतत्वात्प्रथमेऽहनीत्यादिकं पूर्ववत् ।

मन्त्रान्तरं लक्षणान्तरं च दर्शयति—

इन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः प्रथमे पदे देवता निरुच्यते प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

इन्द्र नेदीय इत्ययमृग्द्वयरूपत्वात्प्रगाथः । इन्द्रो नितरामाहूयते यस्मिन्प्र-

---

वायवा याहि दर्शतेमे०—१-२-१ । आ त्वा रथं यथोतये०—८-६८-१ । इदं वसो सुतमन्धः०—८-२-१ । इन्द्र नेदीय एदिहि०—८-५३-५ ।

---

१ ख. 'येन ल' ।

गाथे सोऽयमिन्द्रनिहवः । एदिहीत्येवमाह्वानमत्र श्रूयते । अस्य प्रगाथस्य प्रथमे पाद इन्द्रेति च देवता निर्दिश्यते । तदेतत्प्रथमस्याह्नो रूपं लक्षणम् ।

मन्त्रान्तरे लक्षणान्तरं दर्शयति—

**प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्,** इति ।

ब्राह्मणस्पत्यः प्रगाथ इत्यनुवर्तते । अत्र प्रशब्दो लक्षणम् ।

अथ मन्त्रत्रये लक्षणं दर्शयति—

**अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः प्रथमेषु पदेषु देवता निरुच्यन्ते प्रथमेऽहनि, प्रथमस्याह्नो रूपम्,** इति ।

शस्त्रमध्ये प्रक्षेपणीया ऋचो धाय्याः । अग्निर्नेतेति प्रथमा धाय्या । त्वं सोम इति द्वितीया । पिन्वन्त्यप इति तृतीया । एतासां तिसृणामृचां प्रथमेषु पादेष्वग्निसोममरुद्देवता निर्दिश्यन्ते । पिन्वन्त्यपो मरुतः सुदानव इति श्रवणात् । सोऽयं देवतानिर्देशो लक्षणम् ।

मन्त्रान्तरे प्रशब्दरूपं लक्षणं दर्शयति—

**प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्,** इति ।

मन्त्रान्तर आकाररूपं लक्षणं दर्शयति—

**आ यात्विन्द्रो वस उप न इति सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्,** इति ।

अथ निष्केवल्यशस्त्रगतस्य मन्त्रस्य रथंतरसंबन्धरूपं लक्षणं दर्शयति—

**अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथंतरं पृष्ठं भवति राथंतरेऽहनि प्रथमेऽहनि**

---

प्रैतु ब्रह्मणस्पतिः प्र०—१-४०-३ । अग्निर्नेता भग इव०—३-२१-४ । त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं०—१-९१-२ । पिन्वन्त्यपो मरुतः०—१-६४-६ । प्र व इन्द्राय बृहते०—८-८९-३ । आ यात्विन्द्रो वस०—४-२१-१ । अभि त्वा शूर नोनुमः०—७-३२-२२ । अभि त्वा पूर्वपीतये०—८-३-७ ।

**प्रथमस्याह्नो रूपम् ,** इति ।

अभि त्वा शूरेति रथंतरसाम्नो योनिभूतः । अभि त्वा पूर्वपीतय इति तस्यानुचरः । अतोऽभि त्वा शूरेत्यत्र रथंतरसामसाध्यं पृष्ठं भवति । इदं प्रगाथद्वयं रथंतरसामसंबन्धिन्यहनि योग्यमतो रथंतरसंबन्धस्य रूपस्य लक्षणस्य सद्भावात्प्रथमेऽहनि प्रयुज्यते ।

मन्त्रान्तरे त्वाकाररूपं लक्षणं दर्शयति—

**यद्वावान पुरुतमं पुराषाळिति धाय्याऽऽवृत्रहेन्द्रो नामान्यप्रा इत्येति प्रथमेऽहनि प्रथमस्याह्नो रूपम् ,** इति ।

यद्वावानेति शस्त्रमध्ये प्रक्षेपणीया । तस्या द्वितीयपादादावा वृत्र हेत्याकारः श्रुतः ।

मन्त्रान्तरे पिबतिधातुरूपं लक्षणं दर्शयति—

**पिबा सुतस्य रसिन इति सामप्रगाथः पिबवान्प्रथमेऽहनि प्रथमस्याह्नो रूपम् ,** इति ।

पिबा सुतस्येत्ययं कस्यचित्सामविशेषस्याऽऽधारभूतः प्रगाथः ।

अथ निविद्धानीयस्य सूक्तस्याऽऽदौ किंचित्सूक्तान्तरं विधत्ते—

**त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यं पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै,** इति ।

तार्क्ष्यो देवताऽस्य तार्क्ष्यं स्वस्त्ययनं क्षेमप्राप्तिरूपमतो निविद्धानीयसूक्तस्य पुरस्तात्तार्क्ष्यसूक्तशंसनं स्वस्तितायै यजमानस्य क्षेमाय भवति ।

वेदनं प्रशंसति—

**स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥ २९ ॥** इति ।

---

यद्वावान पुरुतमं०—१०-७४-६ । पिबा सुतस्य रसिनः०—८-३-१ ।
त्यमू षु वाजिनं०—१०-१७८-१ ।

---

१ ख अभि ।

वेदिताऽनेन वेदनेन स्वस्त्ययनमेव क्षेमप्राप्तिमेव संपादयति । तथा द्वादशाहद्वारा संवत्सरसत्रस्य पारमश्नुते समाप्तिं प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये विंशाध्याये प्रथमः खण्डः ॥ १ ॥ (२९) [१५०] ।

---

यस्य सूक्तस्य पुरस्तात्तार्क्ष्यशंसनं विहितं तस्मिन्निविद्धानसूक्त आकाररूपं लक्षणं दर्शयति—

आ न इन्द्रो दूरादा न आसादिति सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

इदानीं निष्केवल्यमरुत्वतीययोः शस्त्रयोर्निविद्धाने सूक्ते स्तोतुमाह—

संपातौ भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने वामदेवो वा इमाँल्लोकानपश्यत्तान्संपातैः समपतद्यत्संपातैः समपतत्तत्संपातानां संपातत्वं तद्यत्संपातौ प्रथमेऽहनि शंसति स्वर्गस्य लोकस्य समष्ट्यै संपत्त्यै संगत्यै, इति ।

संपत्तिं प्राप्नुवन्त्याभ्यां यजमानाः सर्वाँल्लोकानिति संपातौ । निष्केवल्यमरुत्वतीयनिविद्धानयोः सूक्तयोर्वैकृतयोः संपात इति संज्ञा । आ यात्विन्द्रो वस इति मरुत्वतीयशस्त्रस्य निविद्धानं सूक्तम् । आ न इन्द्र इति निष्केवल्यस्य निविद्धानं सूक्तम् । एतयोः संपात इति संज्ञा प्रतिपाद्यते । पुरा कदाचिद्वामदेव इमान्भूरादीँल्लोकान्दृष्ट्वा तत्प्राप्त्युपायं विचार्य संपातसूक्तैस्तान्प्राप्तवान् । अतः संपतति सम्यक्प्राप्नोति लोकानेतैरिति संपातत्वं नाम संपन्नम् । तथा सत्यत्र प्रथमेऽहनि निष्केवल्यमरुत्वतीययोः संपातनामकसूक्ते[२] यदि शंसेत्तदानीं तच्छंसनं स्वर्गलोकप्राप्तिभोग्यवस्तुसंपत्तितद्भोगसंबन्धार्थं संपद्यते ।

अथ द्वयोस्तृचयो रथंतरसंबन्धरूपं लक्षणं दर्शयति—

तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति

---

आ न इन्द्रो दूरादा न०—४-२०-१ । तत्सवितुर्वृणीमहे०—५-८२-१ । अद्या नो देव सवितः०—५-८२—४ ।

---

१ ख. °नाः स्वर्गलोका° । २ क. °सूक्तं य° ।

वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति।

अद्या न इति तृचस्तस्यानुचरोऽत उभयोरपि रथंतरसंबन्धोऽस्तीति रथंतरसंबद्धेऽहनि योग्यताऽस्ति।

सूक्तान्तरे युजिधातुरूपं लक्षणं दर्शयति—

युञ्जते मन उत युञ्जते धिय इति सावित्रं युक्तवत्प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति।

प्रथमाया ऋचोऽवसाने देवस्य सवितुः परिष्टुतिरिति श्रुतत्वादिदं सवितृदेवताकम्। युजिधातुस्तु विस्पष्टः।

सूक्तान्तरे प्रशब्दरूपं लक्षणं दर्शयति—

प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति द्यावापृथिवीयं प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति।

अस्मिन्वैश्वदेवशस्त्रे सूक्तान्तरं विधत्ते—

इहेह वो मनसा बन्धुता नर इत्यार्भवं यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं तद्यत्प्रेति सर्वमभविष्यत्प्रैष्यन्नेवास्माल्लोकाद्यजमाना इति तद्यदिहेह वो मनसा बन्धुता नर इत्यार्भवं प्रथमेऽहनि शंसत्ययं वै लोक इहेहास्मिन्नेवैनांस्तल्लोके रमयति, इति।

इहेह व इत्येतत्सूक्तमृभुदेवताकम्। द्वितीयाया ऋचोऽन्ते तेन देवत्वमृभवः समानशेति श्रवणात्। आकारप्रशब्दादिकं लक्षणं मन्त्रे नास्तीत्याशङ्क्य यद्वेत्यादिना तत्सद्भावे बाध उपन्यस्यते। यदेतदेति च प्रेति चेति तदेतत्प्रथमस्याह्नो रूपं लक्षणमिति पूर्वमुक्तम्। तत्तथा सति यदि प्रेत्यनेन लक्षणेन युक्तं सर्वं सूक्तजातमभविष्यत्तदानीं यजमाना अस्माल्लोकात्प्रैष्यन्प्रैष्यन्ति मरिष्य-

युञ्जते मन उत०—५-८१-१। प्र द्यावा यज्ञैः पृथिवी०—१-१५९-१। इहेह वो मनसा०—३-६०-१।

१ ख. तृचः प्रतिपदनु°। २ ख. °रोऽनयोरुभ°।

न्त्येवेति बाधोपन्यासः । तद्यदित्यादिना समाधानमुपन्यस्यते । यस्मात्प्रश-ब्दयोगे बाधोऽस्ति तस्मात्कारणादिहेहेति सूक्तं यदि प्रथमेऽहनि शंसेत्त-दानीमिहेहशब्देनास्य भूलोकस्य विवक्षितत्वादस्मिन्नेव भूलोके तत्सूक्तपाठेनै-नान्यजमानान्रमयति चिरं क्रीडयति । ततः प्रशब्दप्रयुक्तो मरणबाधोऽपि परिहृतो भवति ।

सूक्तान्तरस्य प्रथमपादे देवताभिधानं लक्षणं दर्शयति—

देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्व-
देवं प्रथमे पदे देवता निरुच्यन्ते प्रथ-
मेऽहनि प्रथमस्याह्नो रूपम्, इति ।

देवानित्यादिके सूक्ते बहुवचनान्तस्य देवशब्दस्य श्रवणाद्देवताबाहुल्येनेदं सूक्तं वैश्वदेवम् । प्रथमपादे देवशब्दस्तु विस्पष्टः ।

तत्र स्वस्तिशब्दस्य तात्पर्यं दर्शयति—

महान्तं वा एतेऽध्वानमेष्यन्तो भवन्ति ये
संवत्सरं वा द्वादशाहं वाऽऽसते तद्यद्दे-
वान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं
प्रथमेऽहनि शंसति स्वस्तितायै, इति ।

ये यजमानाः संवत्सरसत्रं द्वादशाहं वाऽनुतिष्ठन्ति, एते दीर्घमध्वानं गन्तु-मुद्युक्ता भवन्ति । प्रयोगबाहुल्येनैकाहवत्सहसा समाप्त्यभावात् । अतो देवा-नित्यादिसूक्ते स्वस्तय इत्येतस्य पदस्य शंसनं स्वस्तितायै क्षेमार्थं भवति ।

वेदनं प्रशंसति—

स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य
पारमश्नुते य एवं वेद येषां चैवं विद्वा-
नेतद्धोता देवान्हुवे बृहच्छ्रवसः स्वस्तय
इति वैश्वदेवं प्रथमेऽहनि शंसति, इति ।

उक्तार्थस्य वेदिता तेन स्वस्त्ययनमेव द्वादशाहस्य क्षेममाप्तिमेव कुरुते । क्षेमेणैव संवत्सरसत्रस्य समाप्तिं प्राप्नोति । किंच येषां यजमानानामुक्तार्थवेदी

देवान्हुवे बृहच्छ्रवसः०— १०-६६-१ ।

होता शंसति तेऽपि यजमाना द्वादशाहं क्षेमेणैव प्राप्नुवन्ति संवत्सरसत्रं च समापयन्ति ।

सूक्तान्तरस्य प्रथमे पादे देवताभिधानलक्षणं दर्शयति—

वैश्वानराय पृथुपाजसे विप इत्याग्निमारु-
तस्य प्रतिपत्प्रथमे पदे देवता निरुच्यते
प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

आग्निमारुतशस्त्रस्य वैश्वानरायेति सूक्तं प्रतिपत्कर्तव्यम् । स एव शब्दो विस्पष्टं देवतामभिधत्ते ।

सूक्तान्तरे प्रशब्दरूपं लिङ्गं दर्शयति—

प्रत्वक्षसः प्रतवसो विरप्शिन इति मारुतं
प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

प्रत्वक्षस इति सूक्ते द्वितीयस्या ऋचो द्वितीयपादे वय इव मरुत इति श्रवणादिदं सूक्तं मरुद्देवताकं शंसेत् । अत्र प्रशब्दो विस्पष्टः ।

वक्ष्यमाणस्य जातवेदस्यसूक्तस्य पुरस्तादेतामृचं[1] विधत्ते—

जातवेदसे सुनवाम सोममिति जातवे-
दस्यां पुरस्तात्सूक्तस्य शंसति स्वस्त्य-
यनं वै जातवेदस्याः स्वस्तितायै, इति ।

जातवेदा देवता यस्या ऋचः सेयं जातवेदस्या । तद्देवताकत्वं प्रथमपादे देवताभिधानं लिङ्गं च विस्पष्टम् । अस्यामृच्यरातीयतो निदहातीति शत्रुदाहश्रवणान्नावेव सिन्धुमिति नौदृष्टान्तेन दुरितात्ययश्रवणाच्च स्वस्त्ययनं क्षेमगमनमत्र विद्यते । तस्मादियं क्षेमप्राप्त्यै भवति ।

वेदनं प्रशंसति—

स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्स-
रस्य पारमश्नुते य एवं वेद, इति ।

---

वैश्वानराय पृथुपाजसे०—३–३–१ । प्रत्वक्षसः प्रतवसः०—१–८७–१ । जातवेदसे सुनवाम०—१–९९–१ ।

---

१ क. 'देकामृ' ।

सूक्तान्तरे प्रशब्दलिङ्गं दर्शयति—

प्रतव्यसीं नव्यसीं धीतिमग्नय इति जातवेदस्यं प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्, इति ।

यद्यप्यस्मिन्सूक्ते जातवेदःशब्दो न श्रुतस्तथाऽपि तदर्थवाची शब्दः श्रूयते । जातमुत्पन्नं विश्वं तद्वेत्तीति जातवेदास्तत्पर्यायो विश्ववेदःशब्दः । स च यमेरिरे भृगवो विश्ववेदसमिति चतुर्थ्यामृचि श्रूयते । तस्मादिदं सूक्तं जातवेदस्यं निविद्धानीयं शंसेत् । अत्र प्रतव्यसीमिति प्रशब्दो विस्पष्टः ।

वैश्वानरायेत्यादिकं यदाग्निमारुतं शस्त्रमुक्तं तदेतत्प्रशंसति—

समानमाग्निमारुतं भवति यच्चाग्निष्टोमे यद्वै यज्ञे समानं क्रियते तत्प्रजा अनु समनन्ति तस्मात्समानमाग्निमारुतं भवति ॥ ३० ॥ इति ।

अस्मिन्प्रथमेऽहनि यदाग्निमारुतं शस्त्रमुक्तं यच्चाग्निष्टोमे पूर्वनिरूपितमाग्निमारुतशस्त्रं तदुभयं समानमेकविधम् । न्यूनाधिकमन्त्राणामभावात् । यज्ञे यदेवाङ्गं समानं क्रियते तदङ्गमनु पश्चात्प्रजा ऋत्विग्रूपाः पुत्रादिरूपाश्च समनन्ति सम्यक्चेष्टन्ते । सुखेन जीवन्तीत्यर्थः । तस्मात्समानं तुल्यमाग्निमारुतशस्त्रं कर्तव्यम् । अत्र प्रथमस्याह्नो लिङ्गेषु 'आशुमद्वायत्रं करिष्यदयं लोकोऽभ्युदितः' इति लिङ्गचतुष्टयमत्र नोदाहृतं तद्यथासंभवमन्वेष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये विंशाध्याये द्वितीयः खण्डः ॥ २ ॥ ( ३० ) [ १५१ ] ।

---

द्वादशाहगतनवरात्रे प्रथममहर्निरूप्य द्वितीयमहर्निरूपयति—

इन्द्रो वै देवता द्वितीयमहर्वहति पञ्चदशस्तोमो बृहत्साम त्रिष्टुप्छन्दः, इति ।

देवतानां मध्य इन्द्रो देवता । स्तोमानां मध्ये पञ्चदशस्तोमः । साम्नां मध्ये बृहत्साम । छन्दसां मध्ये त्रिष्टुप्छन्द इत्येतच्चतुष्टयं द्वितीयस्याह्नो निर्वाहकम् ।

---

प्रतव्यसीं नव्यसीं धीतिं०— १–१४३–१ ।

---

१ ख. यद्वै । २ ख. ङ. द 'मन्त्रं नोदा' ।

वेदनं प्रशंसति—

यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद, इति ।

वेदिता स्वकीयवेदनेन यथोक्तदेवतास्तोमसामच्छदांस्यनतिक्रम्य तत्प्रसादेन समृद्धो भवति ।

अथ द्वितीयस्याह्नो गमकानि मन्त्रगतानि लिङ्गानि निर्दिशति—

यद्वै नेति न प्रेति यत्स्थितं तद्द्वितीयस्याह्नो रूपं यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितं यद्बार्हतं यत्त्रैष्टुभं यत्कुर्वदेतानि वै द्वितीयस्याह्नो रूपाणि, इति ।

प्रथमस्याह्न एति प्रेति लिङ्गद्वयं यद्वै यदेवोक्तं तदत्र द्वितीयस्याह्नो लिङ्गं न भवतीति नकारद्वयेनोभयं निषिध्यते । यत्स्थितं तिष्ठतिधातुरूपवद्बहुषु स्थानेष्वप्रच्युतत्वेनावस्थितं वा मन्त्रे दृश्यते तद्द्वितीयस्याह्नो रूपं लिङ्गम् । तथैवोर्ध्वशब्दोपेतं प्रतिशब्दोपेतमन्तःशब्दोपेतं वृषश(ण्श)ब्दोपेतं वृधन्शब्दोपेतं च यदाम्नातं तत्सर्वं द्वितीयस्याह्नो रूपम् । यत्र साक्षाच्छब्दो न श्रूयते तत्र तदर्थो द्रष्टव्यः । मध्यमे पदे देवताभिधानमन्तरिक्षलोकाभिधानं बृहत्सामसंबन्धं त्रिष्टुप्छन्दःसंबद्धं वर्तमानार्थप्रत्ययुक्तं करोतिधातुरूपमित्येतानि सर्वाणि द्वितीयस्याह्नो रूपाणि निरूपकाणि लिङ्गानि द्रष्टव्यानि ।

अस्मिन्द्वितीयेऽहन्याज्यशस्त्रं विधत्ते—

अग्निं दूतं वृणीमह इति द्वितीयस्याह्न आज्यं भवति कुर्वद्द्वितीयेऽहानि द्वितीयस्याह्नो रूपम्, इति ।

अत्र कुर्वदिति लिङ्गोपन्यासः । यद्यप्यग्निं दूतमित्यादौ साक्षात्कुर्वच्छब्दो न श्रूयते तथाऽपि करोत्यर्थस्य सर्वधातुगतसामान्यत्वाद्वर्तमानार्थवाचिप्रत्ययान्तं धातुमात्रं कुर्वच्छब्देन विवक्षितम् । अत्रापि वृणीमह इति वर्तमानार्थवाचिप्रत्ययान्तो धातुः श्रूयते । तस्माद्द्वितीयेऽहन्येतत्सूक्तं विनियोक्तुं योग्यम् । ततो द्वितीयस्याह्नो लिङ्गम् ।

---

अग्निं दूतं वृणीमहे०—१-१२-१ ।

---

१ ख दृश्यते ।

आज्यशस्त्रं विधाय प्रउगशस्त्रं विधत्ते—

**वायो ये ते सहस्रिण इति प्रउगं सुतः सोम ऋतावृधेति वृधन्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।**

वायो ये त इत्यादिकं शस्त्रं कुर्यात् । एतस्मिन्सूक्ते चतुर्थ्या ऋचो द्वितीयः पादः सुतः सोम ऋतावृधेति । अस्य पादस्यान्ते वृधेति श्रवणादिदं प्रउगं वृधन्वद्वृधिधातुयुक्तम् । द्वितीयशस्त्रस्य तृच इत्यादिकं पूर्ववत् ।

अथ मरुत्वतीयं शस्त्रं विधत्ते—

**विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ वृधन्वच्चान्तर्वच्च द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।**

विश्वानरस्येत्ययं तृचः शस्त्रस्य प्रतिपत्तस्मिंस्तृचे द्वितीयस्या ऋचः प्रथमपादे वृधन्वद्वृधिधातुयुक्तं लिङ्गमस्ति । अभिष्टये सदावृधमिति श्रवणात् । इन्द्र इदित्ययं तृचोऽनुरूपस्तत्रान्तःशब्दयुक्तं लिङ्गमस्ति । प्रथमाया ऋचस्तृतीयपादेऽन्तर्देवानिति श्रवणात् ।

अथ प्रगाथद्वये लिङ्गद्वयं दर्शयति—

**इन्द्र नेदीय एदिहीत्यच्युतः प्रगाथ उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्य ऊर्ध्ववान्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।**

इन्द्र नेदीय इत्यादिकः प्रगाथः प्रथमेऽहन्यपि विहित उत्तरत्रापि विधास्यते । तस्मादत्र विधीयमानोऽच्युतो भवति । प्रच्युतेरभावात् । तदिदमच्युतत्वं स्थितशब्दार्थत्वात्स्थितवाल्लिङ्गम् । उत्तिष्ठेत्ययं प्रगाथ ऊर्ध्वलिङ्गवान् । ऊर्ध्ववाचिन उच्छब्दस्य श्रवणात् ।

अथ तिसृषु धाय्यास्वच्युतत्वलिङ्गं दर्शयति—

**अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति**

---

वायो ये ते सहस्रिणः०—२-४१-१ । विश्वानरस्य वस्पतिं०—८-६८-४ । इन्द्र इत्सोमपा एकः०—८-२-४ । इन्द्र नेदीय एदिहि०-८-५३-५ । उत्तिष्ठ ब्रह्मणस्पते०-१-४०-१ । अग्निर्नेता भग०—३-२१-४ । त्वं सोम क्रतुभिः०—१-९१-२ । पिन्वन्त्यपो मरुतः—१-६४-६ ।

धाय्या अच्युताः, इति ।

अग्निर्नेतेति प्रथमा धाय्या। त्वं सोमेति द्वितीया। पिन्वन्तीति तृतीया । प्रथमेऽहन्यप्येतासां विहितत्वादच्युतत्वम् ।

प्रगाथान्तरे लिङ्गं दर्शयति—

बृहदिन्द्राय गायतेति मरुत्वतीयः प्रगाथो येन ज्योतिरजनयन्नृतावृध इति वृधन्वान्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।

बृहदिन्द्रायेत्येष मरुद्देवताकः। मरुतो वृत्रहन्तमामिति द्वितीयपादे मरुतां[1] श्रवणात् । तस्य येन ज्योतिरिति तृतीयः पादस्तत्र ऋतावृध इति श्रवणादयं प्रगाथो वृधिधातुरूपलिङ्गवान् ।

लिङ्गदर्शनद्वारा सूक्तं विधत्ते--

इन्द्र सोमं सोमपते पिबेममिति सूक्तं सजोषा रुद्रैस्तृपदा वृषस्वेति वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।

इन्द्र सोममित्यस्मिन्सूक्ते सजोषा इत्यादिको द्वितीयस्या ऋचश्चतुर्थः पादस्तत्र वृषस्वेति श्रवणाद्वृषण्वल्लिङ्गमस्ति ।

अथ निष्केवल्यशस्त्रस्य स्तोत्रियानुरूपयोः प्रगाथयोर्बृहत्सामसंबन्धरूपं लिङ्गं दर्शयति—

त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहत्पृष्ठं भवति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।

त्वामिद्धीति बृहत्साम्न आधारभूतः स्तोत्रियः प्रगाथस्त्वं ह्येहीत्यनुचरः प्रगाथः । प्रथमे प्रगाथे बृहत्सामयुक्तं पृष्ठस्तोत्रं भवति । अत्र प्रगाथद्वयस्य बृहत्सामसंबन्धाद्बार्हते बृहत्सामसंबन्धिन्यहनि तदुभयं योग्यम् । द्वितीयस्य

---

बृहदिन्द्राय गायत० - ८-८९-१ । इन्द्र सोमं सोमपते० — ३-३२-१ त्वामिद्धि हवामहे० — ६-४६-१ । त्वं ह्येहि चेरवे० — ८-६१-७ ।

---

[1] क, ग, ट. °दे श्र°।

चाह्नो बृहत्सामसंबन्धित्वात्तस्मिन्नहनि विनियोक्तव्यम् । अयं च बृहत्सामसंबन्धो द्वितीयस्याह्नो लिङ्गम् ।

अथैकस्यामृच्यच्युतत्वलिङ्गं दर्शयति—

**यद्वावानेति धाय्याऽच्युता,** इति ।

प्रथमेऽहन्यप्यस्या ऋचो विहितत्वादच्युतत्वम् ।

अथ प्रगाथान्तरे बृहत्सामसंबन्धिरूपं लिङ्गं दर्शयति—

**उभयं शृणवच्च न इति सामप्रगाथो यच्चेदमद्य यदु च ह्य आसीदिति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्,** इति ।

उभयमित्यादिको बृहत्साम्ना सह प्रयुज्यमानः प्रगाथः । उभयशब्दस्य कोऽर्थः सोऽभिधीयते । अद्यास्मिन्दिने यत्कार्यमासीदिदं च कार्यमेकं यदु च यदपि ह्यः पूर्वेद्युः कार्यमासीत्तदपीत्येवं कार्यद्वयं शृणुवच्छ्रुतमासीदिति मन्त्रगतस्योभयं शृणवदित्यस्यार्थः । बार्हत इत्यादि पूर्ववत् ।

सूक्तान्तरे पूर्ववदच्युतत्वलिङ्गं दर्शयति—

**त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ॥ ३१ ॥** इति ।

तार्क्ष्यदेवताकस्य सूक्तविशेषस्य प्रथमेऽहनि विहितत्वादुत्तरोत्तरोपयोक्ष्यमाणत्वादच्युतत्वम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये विंशाध्याये तृतीयः खण्डः ॥३॥ (३१) [१५२] ।

---

सूक्तान्तरे वृषञ्शब्दोपेतं लिङ्गं दर्शयति—

**या त ऊतिरवमा या परमेति सूक्तं जहि वृष्ण्यानि कृणुही पराच इति वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्,** इति ।

या त ऊतिरित्यस्मिन्सूक्ते जहि वृष्ण्यानीति तृतीयस्या ऋचश्चतुर्थः पादस्तत्र वृषशब्दादुक्तं लिङ्गं दृश्यते ।

---

यद्वावान पुरुतमं०–१०–७४–६ । उभयं शृणवच्च नः०–८–६१–१ । त्यमू षु वाजिनं देवजूतं०–१०–१७८–१ । या त ऊतिरवमा या परमा०. ६–२१–१ ।

अथ वैश्वदेवशस्त्रगतयोस्तृचयोर्बृहत्सामसंबन्धं रूपं दर्शयति —

विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति।

विश्वो देवस्येत्येका ऋक्तत्सवितुरिति द्वे ऋचौ। सोऽयमेकस्तृचो बृहत्सामसंबन्धभूतो वैश्वदेवशस्त्रस्य प्रतिपद्भवति। आ विश्वदेवमित्येष तृचस्तस्यानुचरः। अत उभयोर्बृहत्सामसंबन्धः।

सूक्तान्तरे लिङ्गं दर्शयति—

उदु ष्य देवः सविता हिरण्ययेति सावित्रमूर्ध्ववद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति।

अस्मिंस्तृचात्मके सावित्रसूक्त ऊर्ध्ववाचिन उच्छब्दस्य श्रवणादूर्ध्ववल्लिङ्गमस्ति।

सूक्तान्तरे लिङ्गं दर्शयति—

ते हि द्यावापृथिवी विश्वशंभुवेति द्यावापृथिवीयं सुजन्मनी धिषणे अन्तरीयत इत्यन्तर्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति।

अस्मिन्द्यावापृथिवीये सूक्ते सुजन्मनी इत्येष प्रथमाया ऋचस्तुरीयः पादः। तत्रान्तःपदस्य श्रूयमाणत्वादन्तर्वल्लिङ्गम्।

सूक्तान्तरे लिङ्गं दर्शयति—

तक्षन्रथं सुवृतं विद्मनापस इत्यार्भवं तक्षन्हरी इन्द्र वाहा वृषण्वसू इति वृषण्वद्द्वितीयेऽहनि द्वितीयस्या[illegible]ो रूपम्, इति।

तक्षन्रथमिति सूक्तमृभुदेवताकम्। प्रथमाया ऋचस्तृतीयपादे तक्षन्पितृभ्या-

---

विश्वो देवस्य नेतुः०—५-५०-१। तत्सवितुर्वरेण्यं०—३-६२-१०। आ विश्वदेवं सत्पतिं०—५-८२-७। उदु ष्य देवः सविता०—६-७१-१। ते हि द्यावापृथिवी विश्व०—१-१६०-१। तक्षन्रथं सुवृतं विद्मनापसः०—१-१११-१।

---

१ ख. °र्ध्वलिङ्ग°।

मृभव इति श्रवणात् । तत्रैव तक्षन्हरी इत्यादिको द्वितीयः पादस्तस्मिन्वृषण्वसू इति वृषण्वल्लिङ्गं दृश्यते ।

सूक्तान्तरे लिङ्गं दर्शयति—

यज्ञस्य वो रथ्यं विश्पतिं विशामिति वैश्वदेवं वृषाकेतुर्यजतो द्यामशायतेति वृषण्वद्द्वितीयेऽहानि द्वितीयस्याह्नो रूपम्, इति ।

यज्ञस्येत्यादिसूक्त इन्द्रो मित्रो वरुण इत्येवं बहुदेवताश्रवणादिदं वैश्वदेवम् । वृषाकेतुरित्येष प्रथमायाश्चतुर्थः पादस्तत्र वृषण्वल्लिङ्गमस्ति ।

तदेतत्सूक्तं प्रशंसति—

तदु शार्यातमङ्गिरसो वै स्वर्गाय लोकाय सत्रमासत ते ह स्म द्वितीयं द्वितीयमेवाहरागत्य मुह्यन्ति तान्वा एतच्छार्यातो मानवो द्वितीयेऽहनि सूक्तमशंसयत्ततो वै ते प्र यज्ञमजानन्प्र स्वर्गं लोकं तद्यदेतत्सूक्तं द्वितीयेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै, इति ।

तदु यज्ञस्य वो रथ्यमित्यादिकं सूक्तं शार्यातस्य कस्यचिन्महर्षेः संबन्धादित्यवगन्तव्यम् । कथं संबन्ध इति तदुच्यते । पुरा कदाचिदङ्गिरसो वै महर्षयः स्वर्गार्थं सत्रमनुष्ठातुमुद्युक्तास्ते महर्षयो यस्मिन्यस्मिन्सत्रे पृष्ठ्यषळ (ड)हस्य द्वितीयमहरनुतिष्ठन्ति तत्र सर्वत्र द्वितीयेऽहनि शस्त्रबाहुल्यात्कुत्र किं शस्त्रं पठितव्यमित्यज्ञात्वा मुह्यन्ति । तदानीं शार्यातनामकः कश्चिन्मानव ऋत्विग्भूत्वा तानङ्गिरसो महर्षीन्यज्ञस्य व इत्यादिकं सूक्तं द्वितीयेऽह्न्यशंसयत् । ततः सूक्तप्रभावादेव ते महर्षयो यज्ञं प्र( प्रा )जानन्यज्ञं प्रकर्षेण ज्ञातवन्तः । तद्यज्ञसाध्यं स्वर्गं लोकं च प्र( प्रा )जानन् । तस्माद्द्वितीयेऽह्न्येतस्य सूक्तस्य शंसनेन व्यामोहमन्तरेण यज्ञः प्रज्ञातो भवति स्वर्गश्चावगम्यते ।

शस्त्रान्तरस्य प्रतिपदि लिङ्गं दर्शयति—

---

यज्ञस्य वो रथ्यं विश्पतिं०—१०-९२-१ ।

---

१ ख. शार्यातेः । २ ख. °गतम् । ३ ख. °पल्लिङ्गं ।

पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्निमारुतस्य प्रतिपद्वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।

तत्र वृष्ण इति श्रवणाद्वृषण्वल्लिङ्गम् ।

मारुतसूक्ते लिङ्गं दर्शयति—

वृष्णे शर्धाय सुमखाय वेधस इति मारुतं वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्, इति ।

अत्र प्रथमाया ऋचो द्वितीयपादे प्रभरा मरुद्भ्य इति श्रवणादिदं सूक्तं मारुतम् । वृषण्वल्लिङ्गं स्पष्टम् ।

जातवेदस्यायामृच्यच्युतत्वलिङ्गं दर्शयति—

जातवेदसे सुनवाम सोममिति जातवेदस्याऽच्युता, इति ।

प्रथमेऽहन्यस्या ऋचो विहितत्वादच्युतत्वम् ।

सूक्तान्तरे लिङ्गं दर्शयति—

यज्ञेन वर्धत जातवेदसमिति जातवेदस्यं वृधन्वद्द्वितीयेऽहनि द्वितीयस्याह्ने रूपमह्नो रूपम् ॥ ३२ ॥ इति ।

जातवेदोदेवताकत्वं वृधन्वल्लिङ्गं चात्र विस्पष्टम् । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये विंशाध्याये चतुर्थः खण्डः ॥४॥ (३२) [१५३] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये विंशोऽध्यायः ॥ २० ॥

इत्यैतरेयब्राह्मणे चतुर्थपञ्चिका समाप्ता ॥ ४ ॥

( पञ्चिकाङ्काः—४ । अध्यायाङ्काः—२० । खण्डाङ्काः—१५३ )

---

पृक्षस्य वृष्णो अरुषस्य०—६-८-१ । वृष्णे शर्धाय सुमखाय०—१-६४-१ । जातवेदसे सुनवाम सोमं०—१-९९-१ । यज्ञेन वर्धत जातवेदसं०—२-२-१ ।

